# चन्दमामा आशंसति



"अस्माकं प्रधानमंत्री चिरं जयतात्"



# चन्दमामा

फेब्रवरी – १९८५

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

यदि संस्कृतस्य उन्नतिः साधनीया तर्हि समकाले एव तदाधार-भूतस्य समाजस्य हितविषये अपि चिन्तनीयम्। यतः यदि समाजः सुसम्पन्नः न स्यात् तर्हि संस्कृतस्य अपि स्थितिः अदृढा एव भवेत्।

समाजे बहवः महासमस्याः प्रतिदिनं समाजजीवनं कलुषयन्ति। एतादृशसमस्यानां परिहारः संस्कृततः अपि यदि लभ्यते तर्हि समाजेन संस्कृतं सोत्साहं स्वीक्रियेत। अतः सामाजिकसमस्यानां परिहारविषये एकैकेन अपि संस्कृतज्ञेन सगम्भीरं चिन्तनीयम्।

उदाहरणार्थम्- वयं प्रतिपादयामः किल- राष्ट्रिय-एकता-सम्पादने संस्कृतं प्रबलं साधनम् इति? एतत्सामर्थ्यम् अस्पृश्यतानिवारणकार्ये उपयोक्तव्यम्। अस्पृश्यतादयः समकालिक्य-महासमस्याः। संस्कृतद्वारा वयम् एतां समस्यां क्रमशः निवारयितुं शक्नुमः अपि।

प्रचारापेक्षां विना एतादृशकार्याणि करणीयानि। किं संस्कृतज्ञानाम् अस्माकं तावत् मनोदार्ढ्यं नास्ति? किं वयं संस्कृतस्य वास्तविकीं प्रगतिं मनसा न अभिलषामः?

सम्पुटः-१ फेब्रवरी-८५ सञ्चिका-११

प्रतिकृतिमूल्यम् रू. २/- वार्षिकं ग्राहकशुल्कम् रू. २४/-



## जागरणे नवीनः विक्रमः



इंग्लेण्डदेशीयः मारिस् वेसन् महोदयः सामान्यतः४३२ घण्टाः, १६ निमेषान् यावत् जाग्रत् एव स्थित्वा १९७७तमे वत्सरे नूतनं विश्वविक्रमं स्थापितवान्। एतेषु एव दिनेषु केनडा-निवासी विक्टरजाबो नामकः विद्यार्थी पूर्वोक्तापेक्षया निमेषत्रयम् अधिकं स्थित्वा नवीनविक्रमं स्थापितवान्।

## एकपादेन स्थितिः-नूतनः विक्रमः

श्रीलङ्कानिवासी कुमार-आनन्दन् महोदयः ३३ घण्टाः यावत् एकपादेन स्थित्वा नवीनं विक्रमं स्थापितवान्।



## पण्डितः बालः



बेलग्रेड्नगरस्य दशवर्षीयाय मायिड्राग् मियोलर नामकाय बालाय, विंशतितमे वयसि विद्यार्थिनः विश्वविद्यालयेषु यत् पठन्ति तत् पठितुम् अनुमतिः दत्ता अस्ति। विज्ञानं गणितं च अधीयानः एषः बालः सप्तमासात्मके वयसि एव भाषितुं शक्तवान् आसीत्। द्वितीयवर्षे पठनम् लेखनं च अभ्यस्तवान् आसीत् एषः।

१. अन्तरिक्षे कृत्रिमस्य उपग्रहस्य प्रेषण-योजनां सर्वप्रथमं कः विज्ञानी अन्विष्टवान्?

२. कस्य प्रसिद्धपुरुषस्य जन्मसमये एव दन्ताः उदभूताः आसन्?

३. भवन्तः तां सुप्रसिद्धां महिलां जानन्ति वा, या सर्वदा स्वकोषे उलूकं स्थापयति स्म?

४. इतिहासे तादृशः कः प्रसिद्धः यस्य मुखं सर्वदा श्मश्रुरहितम् एव दृश्यते?

(उत्तराणि ६४ तमे पृष्ठे)



# वाणिज्यदक्षः

साकेतपुरे मन्दारगुप्तः नाम एकः धनाढ्यः वणिक् आसीत्। तस्य पुत्राः न सन्ति। केवलम् एका एव पुत्री। तस्याः नाम वत्सला। मन्दारगुप्तः चिन्तयन् आसीत् यत् योग्ययुवकाय मदीया कन्या दातव्या, अनन्तरं तस्य हस्ते वाणिज्यं सर्वं समर्पणीयम्, विश्रान्तिजीवनं सुखमयं यापनीयम् इति।

एतद्विषये सः स्वपत्नीं पृष्टवान्। तदा सा 'स्वसमीपसम्बन्धी कुमारदासः एव योग्यः' इति उक्तवती। किन्तु मन्दारगुप्तस्य मनसि 'स्वसमीपसम्बन्धी चन्द्रपालः एव योग्यः वरः' इति भावना आसीत्।

बहोः कालतः मञ्जुनाथः मन्दारगुप्तस्य गृहे कार्यं करोति स्म। सः अपि तदानीं तत्र एव आसीत्। सः विनम्रस्वरेण उक्तवान्- "श्रीमन्! समस्यायाः परिहारे सूचनां दातुम् अहं यद्यपि अनर्हः, तथापि यदि अनुमतिः अस्ति, अहं किञ्चित् निवेदयितुम् इच्छामि" इति।

"वदतु नाम। किं निवेदयितुम् इच्छति भवान्" इति पृष्टवान् मन्दारगुप्तः।

"भवतोः उभयोः अपि विचारः समानः यत् वत्सलायाः भावी पतिः वाणिज्ये समर्थः भवतु इति। एवं स्थिते सामर्थ्यं ज्ञातुं कुमरदासचन्द्रपालयोः कृते परीक्षाम् एकाम् आयोजयामः चेत् वरं किल?" इति।

"कीदृशी परीक्षा भवतु?" इति पृष्टवान् मन्दारगुप्तः।

"तौ द्वौ अपि सुवर्णद्वीपं प्रेषणीयौ। तत्र कस्य वस्तुनः वाणिज्यं आरब्धं चेत् लाभाय भवेत् इति ज्ञात्वा ताभ्याम् आगन्तव्यम्। तयोः उत्तरस्य आधारेण वयं वाणिज्यदक्षतायाः मूल्याङ्कनं कर्तुं शक्नुमः" इति उक्तवान् मञ्जुनाथः।



कुमारदासः च सुवर्णद्वीपं प्रति प्रेषितौ ।

केषुचित् एव दिनेषु तौ सुवर्णद्वीपं परिशील्य साकेतपुरं प्रत्यागतौ ।

मन्दारगुप्तः मञ्जुनाथम् आहूय स्वसमीपे उपवेशितवान् । अनन्तरं कुमारदासम् आहूय पृष्टवान्– "सुवर्णद्वीपे कीदृशं वस्तु जनाः अपेक्षन्ते ? कस्य वस्तुनः विक्रयणेन वयं विशेषलाभं प्राप्तुं शक्नुमः ?" इति ।

"नवीनं वाणिज्यम् आरब्धुं भवता किमर्थं वा सुवर्णद्वीपम् अङ्गीकृतम् इति अहं तु न जानामि । तत्रत्या परिस्थितिः वयं यथा चिन्तयामः ततोऽपि भीकरा अस्ति । एवं स्थिते अपि यदि तत्र वाणिज्यम् आरम्भणीयम् इत्येव अस्ति चेत् तद्देशे आहारवस्तूनि एव विक्रेतव्यानि । यतः तत्र खाद्यवस्तूनाम् अभावः महान् दृश्यते । एतेन वयं लक्षशः रूप्यकात्मकं लाभं प्राप्तुं शक्नुमः" इति स्वकीयम् अभिप्रायं प्रकटितवान् कुमारदासः ।

अनन्तरं मन्दारगुप्तः चन्द्रपालम् अपि एवम् एव आहूतवान् । कुमारदासं यथा पृष्टवान् तथैव पृष्टवान् मन्दारगुप्तः । तदा चन्द्रपालः उक्तवान्– "यदि वस्तुतः भवान् सुवर्णद्वीपेन सह वाणिज्यसम्बन्धं स्थापयितुम् इच्छति, तर्हि तद्विषये इदानीम् एव चिन्तनीयम् । योग्या व्यवस्था अपि शीघ्रम् एव करणीया । तत्र इदानीं मलिन-छिन्न-वस्त्रधारिणः एव अधिकतया दृश्यन्ते । स्वच्छवस्त्रधारिणः अतीव

"किम् ? सुवर्णद्वीपे वाणिज्यस्य आरम्भः ? नाम्ना केवलं सुवर्णद्वीपं तत् । वर्षद्वयतः तत्र क्षामः विजृम्भते । सर्वे जनाः आहारं विना महत्कष्टम् अनुभवन्तः सन्ति तत्र" इति उक्तवान् मन्दारगुप्तः ।

"श्रीमन् ! अतः एव तौ तत्र प्रेषणीयौ इति अहं वदामि । अन्यप्रदेशेषु वाणिज्यं नाम बहु सुलभम् । सर्वेऽपि निरायासं कुर्युः । क्षामपीडिते सुवर्णद्वीपे कीदृशवाणिज्यं कर्तुं शक्यते इति निर्णये एव दक्षतायाः परीक्षा भविष्यति" इति उक्तवान् मञ्जुनाथः ।

मन्दारगुप्तः एतां परीक्षां अङ्गीकृतवान् । तस्य पत्नी अपि 'एषा पद्धतिः योग्या' इति अङ्गीकृतवती । अनन्तरदिने एव चन्द्रपालः

विरला: । न सन्ति इत्यपि वक्तुं शक्यते । वाणिज्यविषये मम अपेक्षया भवत: एव अनुभव: अधिक: किल ? अत: एतद्विषये मया अधिकं किमपि वक्तव्यं नास्ति इति चिन्तयामि'' इति उक्तवान् चन्द्रपाल: ।

द्वयो: अपि उत्तरं श्रुत्वा मन्दारगुप्त: चिन्तितवान्– 'कुमारदास: एव योग्य: वर:' इति। अनन्तरं स: कुमारदासं चन्द्रपालं च प्रेषयित्वा मञ्जुनाथम् उक्तवान्– "चन्द्रपाल: मम बन्धु: इति कृत्वा तद्विषये विशेषसहानुभूति: आसीत् । मम तु इदानीम् आश्चर्यम् इव भाति यत् स: क्षामपीडिते अपि सुवर्णद्वीपे वस्त्रवाणिज्यं कर्तुं सूचनां यच्छन् अस्ति इति । एतादृशाय अदूरदर्शि-युवकाय अहं कदापि मम पुत्रीं न दास्यामि एव । अस्माकं परीक्षायां कुमारदास: एव विशेषसामर्थ्यं प्रदर्शितवान्। अत: कुमारदास: एव मम जामाता भविष्यति'' इति ।

तदा आश्चर्यं प्रकटयन् मञ्जुनाथ: उक्तवान्– ''श्रीमन् ! चन्द्रपालस्य सामर्थ्यविषये सन्देहं प्रकटयन् भवान् अद्य किमर्थम् एवं व्यवहरति इति अहं न जानामि । मम अभिप्रायानुसारं अस्यां परीक्षायां चन्द्रपाल: एव जयं प्राप्तवान्'' इति ।

''एतत् कथम् ? केन आधारेण भवान् एवं वदति ?'' इति पृष्टवान् मन्दारगुप्त: ।

''प्रत्यक्षं यत् दृश्यते तद्विषये सामान्य: कश्चित् वणिक् अपि स्वाभिप्रायं प्रकटयितुं



शक्नोति । किन्तु य: भविष्यम् अपि विचिन्त्य स्वाभिप्रायं प्रकटयति स: एव समर्थ: वणिक् । उदाहरणार्थं कुमारदासस्य व्यवहारम् एव परिशीलयतु भवान् । स: सुवर्णद्वीपं गत्वा केवलं सद्य:कालीनां परिस्थितिं परिशील्य स्वकीयम् अभिप्रायं प्रकटितवान् । तत्रापि अदूरदर्शिता अस्ति । सुवर्णद्वीपं प्रति खाद्यवस्तूनि इत: प्रेषयितुम् इदानीम् अनुमति: न लभ्यते एव । यदि कथञ्चित् गुप्तरूपेण वयं प्रेषयितुं शक्नुम: चेदपि दारिद्र्ये निमग्ना:, बुभुक्षया पीडिता: च जना: योग्यं मूल्यं दत्त्वा क्रीणीयु: इति विश्वास: नास्ति। एतादृशपरिस्थितौ अस्मदीयानि वस्तूनि लुण्ठितानि अपि भवेयु: । अस्माभि: महती हानि: अनुभोक्तव्या भवेत्'' इति उक्तवान् मञ्जुनाथ: ।

मन्दारगुप्तः स्वसम्मतिं सूचयन् शिरः कम्पितवान्, पृष्टवान् च-"चन्द्रपालः यथा सूचयति तदनुगुणं वस्त्राणि प्रेषितानि चेदपि एषा एव परिस्थितिः स्यात् किल ?" इति।

"एतत्क्षणे एव सुवर्णद्वीपे वस्त्रवाणिज्यम् आरम्भणीयम् इति चन्द्रपालः न उक्तवान्। किन्तु एतदर्थं योग्यसिद्धता करणीया इति तेन सूचितम्। एतदतिरिच्य सः भवदीयां वाणिज्य-दक्षतां सम्यक् जानाति। अतः एव सः उक्त-वान्- अहं विशेषतया किमपि न वदामि इति। एतेन एव तस्य अभिप्रायः स्पष्टतया ज्ञायते। अस्माकं नगरे इदानीं बहवः वेमाः कार्यरहिताः कोणेषु पतिताः सन्ति। इदानीं तेषाम् उप-योगेन अल्पव्ययेन वस्त्राणि निर्मातव्यानि" इति उक्तवान् मञ्जुनाथः।

मञ्जुनाथस्य वचनेन मन्दारगुप्तस्य विचारः परिवृत्तः। चन्द्रपालस्य विचारः दूरदर्शितापूर्णः स्यादेव इति सः निश्चितवान्। अतः सः उत्साहपूर्वकम् उक्तवान्- "आम, भवतः विचारः समीचीनः एव। किन्तु प्रथमं तत्र सुवर्णद्वीपे क्षामः निवारितः भवेत् किल ?" इति।

"कस्मिंश्चित् अपि देशे कदापि वृष्टिः न भवति इति नास्ति। वर्षाभ्यन्तरे वर्ष-द्वयाभ्यन्तरे वा सुवर्णद्वीपे वृष्टिः भविष्यति एव। तत्रत्या परिस्थितिः उत्तमा भविष्यति। तदा जनाः आत्मनः वस्त्राणि दृष्ट्वा जुगुप्साम् अनुभवन्ति। एकैकः अपि समीचीनवस्त्रं धर्तुम् इच्छति। अतः एव सूक्ष्मबुद्धिः चन्द्रपालः वस्त्रवाणिज्यं करणीयम् इति सूचितवान्" इति उक्तवान् मञ्जुनाथः।

'चन्द्रपालस्य बुद्धिः कियत्तीक्ष्णा' इति मन्दारगुप्तः इदानीं ज्ञातवान्। अनन्तरं सः वत्सला-चन्द्रपालयोः विवाहं सवैभवं कारित-वान्।

एतदनन्तरं वर्षद्वयाभ्यन्तरे चन्द्रपालः स्वबुद्धि-कौशलेन वाणिज्यदक्षतया च प्रसिद्धः जातः। एतेन मन्दारगुप्तः तत्परिवारसदस्याः च बहु सन्तुष्टाः।





सिध्येत। यतः सः सर्वथा व्यावहारिक-जीवनतः विमुखः अस्ति। यदि द्वितीयः गुणवर्धनः राजपदे नियोज्येत, तर्हि देशस्य नाशः निश्चितः। एषः दुष्टगुणानां सर्वेषाम् आकरः।

गुणवर्धनस्य स्वभावविशेषाः यशोवर्धनेन अपि ज्ञाताः आसन्। बहुवारं सः सन्मार्गम् उपदिष्टवान् अपि। तथापि प्रयोजनं नास्ति। विंशतितमे वयसि एव कश्चित् एवं दुष्टः भवेत् इति राजा ऊहितुम् अपि असमर्थः आसीत्। तथैव राजा विश्वसिति स्म यत् राज्यभारदानेन गुणवर्धनः सन्मार्गे प्रवर्तेत इति।

राजा इदानीं चिन्ताक्रान्तः। अग्रे किं करणीयम् इति उपायः एव न स्फुरति स्म। ''अहं स्वयं निर्णेतुं न शक्नोमि। अतः अन्येषां विचारविमर्शः मया स्वीकरणीयः'' इति राजा चिन्तितवान्। एतदनुसारं मन्त्रिमाण्डलिकानां सभा आयोजिता, विषयः उपस्थापितः च। तत्र केचन उक्तवन्तः- ''गुणवर्धनस्य उपरि राज्य-भारः न निक्षेप्तव्यः। अन्यच्च ज्येष्ठपुत्रे विद्य-माने द्वितीयपुत्राय राज्यदानं न उचितम्। एवं दत्तं चेत् राज्ये अशान्तिः उत्पद्येत। धार्मिकः सदाचारसम्पन्नः तपोवर्धनः एव यदि राजा भविष्यति तर्हि सर्वेषां तृप्तिः भविष्यति'' इति।

महाराजाय यशोवर्धनाय एतत् न रोचते। ''क्षत्रियधर्मे सर्वथा अनासक्तं ज्येष्ठपुत्रं यदि सिंहासने उपवेशयामः, तर्हि सः मन्त्रिणः दासः भविष्यति। यतः धर्मग्रन्थानां पठने पाठने च निमग्नस्य महाराजस्य अनेकानि कार्याणि मन्त्रिणा एव करणीयानि भवन्ति। एवम् एव महता श्रमेण विस्तारितं राज्यं कदा-चित् अन्यहस्तगतम् अपि भवेत्। एतत् सर्वथा न भवेत्। एषा समस्या कथञ्चित् शीघ्रम् एव परिहरणीया'' इति चिन्तितवान् राजा।

एवं रीत्या बहुविधचिन्तया ग्रस्तः राजा अन्ते निश्चयं कृतवान् यत् ''माण्डलिकराजानां नागरिकप्रमुखाणां च सभाम् आहूय तत्र 'द्वितीयं राजकुमारम् उत्तराधिकारित्वेन सिंहासने उप-वेशयामि' इति मदीयं निश्चयं प्रकटयिष्यामि। गुणवर्धनः राज्यशासने इदानीम् आसक्तः न




माहिष्मतीनगरस्य राजा यशोवर्धनः। एषः षष्टिवर्षाणि यावत् राज्यं पालितवान्। विंशतितमे वयसि एव एषः सिंहासने उपविष्टः आसीत्। तदारभ्य बहुषु युद्धेषु विजित्य राज्यविस्तारं कृतवान्। एतादृशविशालराज्यस्य राजा चेदपि वृद्धस्य एतस्य मानसिकशान्तिः नास्ति। अत्र कारणं तदीयौ पुत्रौ एव।

यशोवर्धनस्य तपोवर्धनः गुणवर्धनः इति पुत्रौ। ज्येष्ठः तपोवर्धनः पञ्चविंशतिवर्षीयः। किन्तु लौकिकव्यवहारेषु तस्य अभिरुचिः नास्ति। राजकार्येषु वा भोगविलासेषु वा आसक्तिः नास्ति। सर्वदा धर्मग्रन्थानाम् अध्ययने, दार्शनिकानां पण्डितानां च दर्शने, वेदान्तसम्बन्धिनां सूक्ष्मविषयाणां चर्चायां च सः व्यापृतः भवति स्म। निद्राहारादिविषयेषु अपि सः अनासक्तः।

द्वितीयः पुत्रः गुणवर्धनः विंशतिवर्षीयः। एतस्य तु सर्वथा विरुद्धस्वभावाः। केवलं भोगविलासेषु एवः समयं यापयति। धर्मविषये किञ्चिदपि श्रद्धा नास्ति। असत्यवादिनः, दुष्टाः, कपटिनः च युवकाः तदीयानि मित्राणि।

यशोवर्धनः, स्वकीये वार्धक्यजीवने कुत्रापि आश्रमे स्थित्वा ईश्वरध्यानं कर्तुम् इच्छति स्म। किन्तु शासनपरित्यागतः पूर्वं समर्थः कश्चित् शासनाधिकारनिर्वहणे नियोजनीयः किल? अन्यथा राज्ये अराजकता उत्पद्येत। किन्तु-समर्थः कः अस्ति? यदि तपोवर्धनस्य हस्ते राज्याधिकारः दीयेत तेन देशस्य हितं न




स्यात्। तथापि तपोवर्धनस्य अपेक्षया एषः एव वरम्। राज्यव्यवस्थां सम्यक् द्रष्टुं अशक्तः चेदपि सः राज्यम् अन्यहस्तगतं न करिष्यति एव। शत्रुसम्मुखीकरणे सः समर्थः'' इति।

अल्पे एव काले प्रमुखनागरिकाणां माण्डलिकानां च सभा आयोजिता। तस्यां सभायां यशोवर्धनः स्वविचारम् उपस्थापितवान्। एतत् अपि आश्वासनं दत्तवान् यत्- स्वस्य राज्यत्यागानन्तरं गुणवर्धनस्य राज्याभिषेके ज्येष्ठपुत्रस्य तपोवर्धनस्य आक्षेपः कोऽपि न भविष्यति।

दुष्टकार्येषु प्रसिद्धस्य गुणवर्धनस्य सिंहासने उपवेशनं कस्यापि इष्टं न। तथापि सर्वे महाराजस्य पुरतः भिन्नाभिप्रायं प्रकटयितुं सङ्कोचम् अनुभूतवन्तः। एतन्मध्ये वीरपुरस्य माण्डलिकः सूर्यवर्मा अकस्मात् उत्थाय गुणवर्धनस्य दुर्गुणान् सर्वान् घण्टाघोषम् उल्लिखन् ''कथमपि राज्यभारनिर्वहणार्थं गुणवर्धनः अयोग्यः'' इति स्वकीयं विचारं प्रकटितवान्।

इदानीं सभायां हर्षोद्गारः उत्पन्नः। सूर्यवर्मणः प्रस्तावं सर्वे समर्थितवन्तः। केचन उक्तवन्तः- ''कानिचन वर्षाणि यावत् यशोवर्धनः एव राज्यभारं निर्वहतु। एतस्मिन् अवधौ तपोवर्धनः राजकार्येषु यथा आसक्तः भवेत् तथा प्रयत्नः करणीयः'' इति।

यशोवर्धनः एतेन चिन्ताव्यग्रः जातः। सः यत् इच्छति तत् जनेभ्यः न रोचते। जनेभ्यः यत् रोचते तत् तस्मै न रोचते। तर्हि किं करणीयम्? एवं चिन्तया व्याकुलः सः कमपि निर्णयम् अङ्गीकर्तुं न शक्तः। असङ्ख्यप्रजानां माण्डलिकानां च विरोधेन यदि गुणवर्धनस्य राज्याभिषेकः क्रियेत तर्हि देशे निश्चयेन आन्तरिकयुद्धं भविष्यति एव। तत्रापि माण्डलिकेषु अग्रगण्यः पराक्रमी सूर्यवर्मा आन्तरिकयुद्धस्य नायकः भविष्यति। अतः सद्यःकाले राज्यत्यागविषयप्रस्तावतः पूर्वं गुणवर्धनः राजकार्येषु समर्थः यथा स्यात् तथा करणीयम्। इदानीम् अपि सः न प्रौढः इति कृत्वा चाञ्चल्यं दृश्यते। कालान्तरे सर्वं सम्यक् भवेत्। अतः राजा उद्घोषितवान् यत् मया राज्यत्यागविषयः परित्यक्तः इति। तदा सर्वे आत्मनः हर्षं प्रकटितवन्तः।

सभासमाप्तेः अनन्तरं यशोवर्धनः मन्त्रिणा सह राजोद्यानं गतवान्। तत्र मन्त्रिणः मार्गदर्शनं प्रार्थितवान्। मन्त्री उक्तवान्- 'एतद्विषये सूर्यवर्मणा सह एकान्ते चर्चा करणीया। तदेव उचितम्' इति।

"सूर्यवर्मा माण्डलिकेषु समर्थतमः। शक्तिशाली एषः इतरमाण्डलिकानाम् अपेक्षया बुद्धिमान्। अतः एषः यदि अस्मत्पक्षे प्रविशति तदा जटिला अपि समस्या सुलभतया परिहृता भवेत्" इति मन्त्री स्वसूचना समर्थितवान्।

सूर्यवर्मा उद्याने आहूतः। यशोवर्धनः आदरपूर्वकं स्वपार्श्वे आसनं प्रदर्श्य तम् उक्तवान्- "वर्ममहोदय! अद्य सभायां भवान् यं विचारं प्रकटीकृतवान् तम् अहं न अङ्गीकरोमि। तथापि भवतः धैर्यं साहसं च दृष्ट्वा सन्तुष्टः अस्मि। वीरपुरस्य माण्डलिकाः सर्वदा राजनिष्ठाः एव इति अहं जानामि। गुणवर्धनः वयसा अल्पः स्यात्, किन्तु भवादृशानां समर्थानां मार्गदर्शनेन सहयोगेन च सः समर्थः शासकः भवितुं शक्तः स्यात् एव। एषः तु मम अभिप्रायः।"

"महाराज! धर्माधर्मविवेकयुते साधुशीले तपोवर्धने विद्यमाने, किमर्थं भवान् द्वितीयाय कुमाराय राज्यं दातुं चिन्तयति? जनानां दृष्ट्या एतत् अनुचितम् एव। भवान् ज्येष्ठाय राजकुमाराय यदि सहयोगं मार्गदर्शनं च ददाति तर्हि तदा उचितं भवेत्। यदि भवान् न्यायसङ्गतं



निर्णयम् अङ्गीकरोति तर्हि देशस्य हितं सिध्यति। जनाः अपि ससन्तोषम् तत् अङ्गीकुर्युः'' इति उक्तवान् सूर्यवर्मा।

''तपोवर्धनः लौकिकव्यवहारेषु आसक्तः न किल ? एषः राजा भवति चेत् कः लाभः ? एषः महाराजः जातः चेदपि अराजकता भविष्यति एव'' इति उक्तवान् यशोवर्धनः।

''प्रभो ! सः लौकिकव्यवहारेषु आसक्तः यथा भवेत् तथा करणं कष्टकरं न। आत्मनः कर्तव्यविषये सः बोधनीयः। कर्तव्यप्रज्ञा जागृता चेत् सः राज्यभारं निर्वोढुं समर्थः भविष्यति एव'' इति उक्तवान् सूर्यवर्मा।

तदा राजा मन्त्रिणं प्रश्नार्थकदृष्ट्या दृष्टवान्। मन्त्री अङ्गीकारं सूचयन् शिरः कम्पितवान्।

''एवं तर्हि अहं तपोवर्धनं एकवर्षं यावत् भवतः पर्यवेक्षणे स्थापयिष्यामि। एकवर्षात्मके अवधौ भवान् तं समर्थं करोतु। लौकिकव्यवहारे सः आसक्तः यथा भवेत् तथा प्रथमं करोतु। तं राजोचितशिक्षणसम्पन्नम् अपि कर्तुं शक्नोति किल ?'' इति राजा पृष्टवान्।

सूर्यवर्मा किञ्चित्कालं चिन्तामग्नः सन् 'महाराजस्य प्रस्तावः उचितः' इति अन्ते निश्चितवान्। अतः स्वकीयम् अङ्गीकारं प्रदर्शितवान्।

अनन्तरं सः उक्तवान्- ''एवं तर्हि अहं वीरपुरं गत्वा राज्यभारं पुत्रस्य चन्द्रवर्मणः हस्ते समर्प्य शीघ्रम् एव प्रत्यागमिष्यामि'' इति। यशोवर्धनः स्वकीयं सम्मतिं सूचितवान्।






यशोवर्धनस्य सम्मतिं स्वीकृत्य सूर्यवर्मा स्ववसतिं प्रत्यागतवान्। तद्दिने रात्रौ एव राजधानीं प्रति प्रस्थातुम् सिद्धतां कर्तुम् आरब्धवान्।

एकत्र सूर्यवर्मा स्वप्रतिगमनविषये व्यवस्थां कुर्वन् अस्ति। अपरत्र मार्गमध्ये तं हन्तुं योजना प्रचलति। अस्य कुतन्त्रस्य नायकः सर्पकेतुनामकः माण्डलिकः। तदीयं राज्यं वीरपुरस्य पार्श्वे एव आसीत्। अतः सर्पकेतुः वीरपुरं स्वाधीनं कर्तुं बहोः कालात् प्रयत्नं कृतवान् आसीत्। तथापि तत् असफलम् एव आसीत्। अतः सः चिन्तितवान्- "इदानीं यशोवर्धनस्य द्वितीयपुत्रः गुणवर्धनः स्वपक्षे योजनीयः। तद्द्वारा उद्देशः साधनीयः" इति।

गुणवर्धनः ज्ञातवान् यत्- पितुः अनन्तरम् आत्मनः राज्यस्वीकारे सूर्यवर्मा एव प्रबलं विरोधं प्रकटितवान् इति। एतेन सः कुपितः। गुणवर्धनः चिन्तितवान्- "मदीयं राज्यस्वीकारं बहवः अभिलषितवन्तः आसन्। किन्तु एषः सूर्यवर्मा मध्ये उत्थाय विरोधं प्रकटीकृतवान्। मां निन्दितवान् च। तदारभ्य सभावातावरणं परिवर्तितम्। सूर्यवर्मकारणतः एव अन्ये माण्डलिकाः अपि विरोधं प्रकटीकृतवन्तः। सूर्यवर्मणः हननं विना मार्गे स्थितः कण्टकः उन्मूलितः न भविष्यति। अतः सूर्यवर्मा निवारणीयः एव। किन्तु एकाकी कथम् एतत् कर्तुं शक्नोमि? मम सहचरेषु अपि एतत्कार्यं कर्तुं समर्थः कोऽपि नास्ति" इति।

एवं यदा गुणवर्धनः सूर्यवर्मणः निवारणं चिन्तयन् आसीत् तदा एव सर्पकेतुः तत्र आगतवान्। उभयोः अपि विचारः समानः आसीत्। दुष्टयोः द्वयोः सङ्गमेन द्वेषाग्निः प्रज्वलितः जातः। वातावरणम् अपि अनुकूलकरम् आसीत्।

"भवतः पिता भवन्तम् एव सिंहासने उपवेशयितुम् इच्छति स्म। तथा सः स्पष्टम् उक्तवान् अपि। अस्माकम् अपि इच्छा एवम् एव आसीत्। किन्तु सः वराकः सूर्यवर्मा भवतः अग्रजाय सिंहासनाधिकारं दातुं सिद्धः

अस्ति'' इति प्रस्तावं कृतवान् सर्पकेतुः ।

अनन्तरं सः गुणवर्धनं सूचितवान्- 'सूर्यवर्मा यावत् जीवति तावत् भवान् सिंहासनं प्राप्तुं न शक्नोति। अतः प्रथमं अस्माभिः सः निवारणीयः । 'सः कथं निवारणीयः' इत्यपि मया योजना कृता अस्ति। अद्य रात्रौ सूर्यवर्मा वीरपुरं गमिष्यति । अहं अङ्गरक्षकैः सह वीरपुरमार्गे स्थास्यामि। पर्वतमार्गे स्थित्वा अकस्मात् आक्रमणं करिष्यामि। एतेन तस्य मारणं विनायासं भविष्यति। सूर्यवर्मणः मारणार्थं यावत् सैन्यम् अपेक्षितम् तावत् मम समीपे अस्ति। भवतः सिंहासनप्राप्तौ यद्यत् आवश्यकं तत्सर्वम् करिष्यामि'' इति ।

तदा गुणवर्धनः उक्तवान्- ''यदि भवान् एतत् कार्यं सफलतया करोति तर्हि कालान्तरे अहम् अपि उपकारं करिष्यामि एव। सूर्यवर्मा निवारितः चेत् पुनः राज्यप्राप्तौ विघ्नः एव न भविष्यति'' इति ।

''मदीयं कार्यं सफलं भविष्यति एव। दूरदर्शी अहं बहुपूर्वम् एव आवश्यकव्यूहं रचितवान् अस्मि। सूर्यवर्मणः मरणवार्तायाः श्रवणसमनन्तरम् एव मदीयाः जनाः वीरपुरं वशीकरिष्यन्ति। यद्यपि तत्र सूर्यवर्मणः पुत्रः चन्द्रवर्मा अस्ति। किन्तु तस्य निवारणं कष्टकरं न। मदीयाः सैनिकाः सामान्यजनानां वेषं धृत्वा वीरपुरस्य दुर्गं वशीकरिष्यन्ति। 'केचन दुष्टाः प्रजाः विद्रोहेण माण्डलिकं मारितवन्तः' इति भावना यशोवर्धनस्य मनसि यथा उत्पद्येत तथा करणीयम् अस्माभिः। यदि जागरूकतया कार्यनिर्वहणं क्रियते तर्हि साफल्यं निश्चितम्'' इति उक्तवान् सर्पकेतुः ।




''एतद्विषये आवश्यकं साहाय्यम् अहं करिष्यामि। पितुः मनसि 'सूर्यवर्मा प्रजाकण्टकः राजद्रोही च' इति भावना यथा उत्पद्येत तथा प्रयत्नम् अहं करिष्यामि। सीमाप्रान्ते सूर्यवर्मणः हननम् एतं भावं पोषयिष्यति। अवशिष्टाः सर्वाः व्यवस्थाः भवान् परिशीलयतु'' इति उक्तवान् गुणवर्धनः ।

गुणवर्धनस्य वचनेन सर्पकेतोः उत्साहः अधिकः जातः। ''यदि शक्तिशाली सूर्यवर्मा

एव दूरीक्रियते तर्हि गुणवर्धनः अल्पे एव काले माहिष्मतीनगरस्य राजा भविष्यति । अल्पेन एव श्रमेण वीरपुरम् अपि अहं मद्वशं कर्तुं शक्तः भविष्यामि । विशालराज्यस्य अधिपतेः मम स्थानं राजास्थाने महत्वपूर्णं भविष्यति'' इति चिन्तितवान् सर्पकेतुः ।

एवंरीत्या सूर्यवर्मणः मारणार्थं योजनां कृत्वा सर्पकेतुः अनुचरैः सह शीघ्रम् एव राजधानीतः प्रस्तितः । वीरपुरस्य मार्गे सूर्यवर्मणः प्रतीक्षां कुर्वन् उपविष्टवान् च ।

आत्मनः हननार्थं कुतन्त्रं प्रचलत् अस्ति इति सूर्यवर्मा न जानाति एव । कैश्चित् एव अनुचरैः सह सः तद्दिने सायं स्वराजधानीं प्रस्थितः । रात्रौ मार्गमध्ये किञ्चित् विश्रान्तिं स्वीकृत्य सूर्योदयानन्तरं पुनः प्रयाणम् आरब्धवान् ।

द्वितीयदिने रात्रौ सूर्यवर्मा स्वराज्यस्य सीमाप्रदेशं प्राप्तवान् । स च प्रदेशः पर्वतमयः अरण्यमयः च आसीत् । आपत्तेः आशङ्का अपि तस्य न आसीत् किल ? अतः सः मनसि एव गीतं गायन् शीघ्रम् गच्छन् आसीत् 'राजकुमारः राजकार्यार्थं सज्जीकरणीयः । एतत् गुरुतरं दायित्वं कथं निर्वहणीयम्' इति एका एव चिन्ता तस्य मनसि ।

अकस्मात् पर्वतकन्दरात् कोलाहलः श्रुतः । शब्दश्रवणेन आश्चर्यचकितः सूर्यवर्मा अश्वं स्थगयन् पृष्ठतः परिवृत्य अनुचरान् दृष्टवान् । अनुचरेषु कोऽपि समीपे न दृष्टः । 'ते दूरे वा कुत्रापि दृश्येरन्' इति चिन्तयन् सूर्यवर्मा पुनः पुनः परिवृत्य दृष्टवान् ।

एतावतिकाले नागरिकवेषे स्थिताः खड्गादिशस्त्रसहिताः अनेके सैनिकाः भयङ्करगर्जनं कुर्वन्तः सूर्यवर्मणः उपरि आक्रमणं कृतवन्तः । सूर्यवर्मा निमेषमात्रेणः खड्गं बहिः आकृष्य धैर्येण युद्धार्थं सिद्धः जातः । तावति काले दशद्वादशजनाः आयुधधारिणः गर्जनं कुर्वन्तः जयशब्दम् उच्चरन्तः च युगपत् एव सूर्यवर्मणः उपरि आपतितवन्तः ।






# विवाह—सम्बन्धः

–दृढव्रती त्रिविक्रमः यथापूर्वं वृक्षस्य समीपम् आगतवान् । वृक्षतः शवम् अवतार्य स्कन्धस्य उपरि स्थापितवान् । अनन्तरं मौनं श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः उक्तवान्– "राजन् ! भवदीयः प्रयत्नः कदापि सफलः न जातः । तथापि भवान् प्रयत्नं कुर्वन् एव अस्ति । एषः एव मम आश्चर्यस्य विषयः । भवन्तम् अस्मिन् अर्धरात्रे श्मशानाभिमुखं प्रेषयन् कश्चित् भवतः राजपदस्य अवमानं कुर्वन् अस्ति । किन्तु अहं न जानामि यत् यदा प्रतीकारस्य अवकाशः लभ्यते तदा भवान् प्रतीकारं करोति उत उदारतां प्रकटयति इति । अत्र उदाहरणरूपेण अहं रत्नपादस्य कथां वदामि । श्रमपरिहारार्थं शृणोतु तावत्" इति ।

एवम् उक्त्वा वेतालः कथाम् आरब्धवान्– "गोपवरग्रामे हंसपादनामकः कृषिकः आसीत् । तदीयः पुत्रः रत्नपादः । सः अतीव बुद्धिमान् । सः ग्रामीणशालायां यावत् अध्येतुं शक्यते

## वेतालकथा



तावत् अधीतवान्। किन्तु तावता सः न सन्तुष्टः। अतः सः सुदूरं गुरुकुलं गत्वा पण्डितानां समीपे अध्ययनं कृतवान्। महत् पाण्डित्यं सम्पाद्य स्वग्रामं प्रत्यागतवान्।

रत्नपादस्य पाण्डित्यविषये तद्देशीयः राजा अपि श्रुतवान्। 'एतादृशः पण्डितः मम आस्थानम् अलङ्कर्तुम् अर्हति' इति विचिन्त्य राजा रत्नपादं प्रति एकां वार्तां प्रेषितवान्— 'यदि भवान् मम आस्थानम् अलङ्करिष्यति तर्हि अहं सहस्ररूप्यकात्मकं वेतनं दास्यामि' इति।

'स्वपुत्रः राजसभायां स्थानं प्राप्तवान्। प्रतिमासं वेतनरूपेण सहस्रं रूप्यकाणि प्राप्स्यति' इति ज्ञात्वा हंसपादः बहु सन्तुष्टः।

सः स्वपुत्रं रत्नपादम् आहूय उक्तवान्- "पुत्र! भवान् परिश्रमेण विद्याभ्यासं कृत्वा पण्डितः सञ्जातः। इदानीं महाराजः अपि भवते उद्योगं दातुं सिद्धः अस्ति। इतःपरं भवान् विवाहितः सन् गृहस्थजीवनस्य दायित्वम् अपि स्वीकरिष्यति चेत् अहं निश्चिन्तः भविष्यामि। यदि भवतः अङ्गीकारः अस्ति तर्हि अहं योग्यां वधूम् अन्वेष्टुं प्रयत्नं करोमि। भवान् विवाहितः भूत्वा एव राजधानीं गच्छतु इति मम इच्छा" इति।

रत्नपादः एतस्मिन् एव वयसि विवाहं न इच्छति स्म। तथापि पितुः इच्छायाः विरोधं कर्तुं सः न शक्तवान्।

हंसपादस्य गृहस्य समीपे एव गोपीनाथनामकस्य धनिकस्य गृहम् आसीत्। सः वाणिज्येन लक्षशः रूप्यकाणि सम्पादितवान् आसीत्। सः हंसपादस्य दूरबन्धुः अपि। बाल्यात् आरभ्य उभयोः मैत्री अपि आसीत्।

गोपीनाथस्य एका विवाहयोग्या पुत्री अपि आसीत्। सा न केवलं सुन्दरी, अपि तु विनयशीला गुणवती च। 'एषा मम स्नुषा भवेत्' इति बहुकालतः हंसपादः चिन्तयन् आसीत्। अतः सः चिन्तितवान् यत् इदानीं गत्वा गोपीनाथः एतद्विषये प्रष्टव्यः इति।

रत्नपादः गोपीनाथस्य पुत्रीं परिणेतुम् अङ्गीकारं प्रदर्शितवान्। अनन्तरं हंसपादः गोपीनाथस्य गृहं गतवान्। तत्र वार्तालापमध्ये विवाहप्रस्तावम् अपि कृतवान्। एतं प्रस्तावं

श्रुत्वा आश्चर्यं प्रकटयन् गोपीनाथः उक्तवान्- "भवतः मम च मध्ये दूरसम्बन्धः अस्ति, तथैव मित्रता अपि अस्ति । किन्तु वैवाहिक-सम्बन्धे एतत् गुणद्वयं न पर्याप्तम् । अहं मदीयां पुत्रीं धनिकाय युवकाय दातुम् इच्छामि । यदि एवं न करोमि तदा बान्धवाः आप्ताः च मां निन्देयुः । मदीया पुत्री सुखेन जीवतु इति मम आशा । अतः मित्र, भवतः पुत्राय मदीयां पुत्रीं दातुम् अहं न शक्नोमि । क्षाम्यतु भवान् । अतः भवान् स्वस्य आर्थिकस्थितेः अनुगुणं वधूं चिन्तयतु । मम पुत्र्याः आशा मास्तु' इति ।

एतत् श्रुत्वा लज्जितः हंसपादः उक्तवान्- "मित्र ! मम पुत्रे भवता का न्यूनता दृष्टा ? सः इदानीं राजास्थाने स्थानं प्राप्तवान् अस्ति । सहस्रं रूप्यकाणि वेतनत्वेन प्राप्नोति । स्व-पाण्डित्यबलेन कालान्तरे उच्चस्थितिं प्राप्तुं शक्तः भविष्यति अपि । एवं स्थिते वरस्य पितुः समीपे अपारं धनं भवेत् इत्यत्र किमर्थम् आग्रहः ? कन्यायाः विवाहः वरेण सह भवि-ष्यति, न तु तदीयपितुः समीपे विद्यमानेन धनेन सह । मित्र, भवतः विचारः एवं स्वार्थपरः कथं जातः इति अहं न जानामि । मम तु अभिप्रायः एवम् अस्ति यत्- भवान् स्वपुत्र्याः कृते अनुगुणस्य वरस्य अन्वेषणं करोतु, न तु वरस्य पितुः सम्पत्तिं चिन्तयतु इति ।"

"भवान् अन्यथा न चिन्तयतु, मित्र ! सहस्ररूप्यकात्मकं वेतनं राजधान्यां जीवन-निर्वहणार्थं पर्याप्तं भवेत् । किन्तु तेन सुखं





प्राप्स्येत इति तु स्वप्नमात्रम्'' इति उक्तवान् गोपीनाथः।

हंसपादः मौनं स्वगृहं प्रत्यागतवान्। चिन्तामग्नं पितरं दृष्ट्वा रत्नपादः पितुः चिन्तायाः कारणं पृष्टवान्। हंसपादः तत्र प्रवृत्तं सर्वम् उक्तवान्।

पितुः चिन्तायाः कारणं श्रुत्वा रत्नपादः बहु खिन्नः। 'लोके कीदृशाः जनाः भवन्ति !' इति सः मनसा एव आश्चर्यम् प्रकटितवान्। तथापि मनसि उद्गतं कोपं प्रयत्नेन निगृहीतवान्।

अनन्तरम् अल्पे एव काले पार्श्वग्रामीणस्य कृषिकस्य पुत्रीं रत्नपादः परिणीतवान्।

एकमासाभ्यन्तरे सः राजधानीं गत्वा स्व-गृहस्थजीवनम् आरब्धवान् अपि।

शनैः शनैः रत्नपादः राजास्थाने यथेष्टं कीर्ति सम्पादितवान्। किन्तु आर्थिकदृष्ट्या तदीयपरिस्थितिः पूर्ववत् एव आसीत्। क्रमशः तदीयः कुटुम्बः अपि परिवृद्धः, व्ययः अपि अधिकः जातः। एतत्सर्वं चिन्तयन् रत्नपादः खेदम् अनुभवति स्म।

'एषा परिस्थितिः कथञ्चित् परिवर्तनीया' इति चिन्तयन् रत्नपादः राजास्थानं त्यक्त्वा स्वग्रामं प्रत्यागतवान्। हंसपादः तु इदानीं वृद्धः आसीत्। सः कृषिकार्यं स्वयं कर्तुं न शक्नोति स्म। रत्नपादः अन्याम् अपि भूमिं किञ्चित् क्रीत्वा, तस्यां भूमौ स्वक्षेत्रे च कृषिम् आरब्धवान्।

राजधान्यां तल्पस्य उपरि उपविश्य साहित्यचर्चायां मग्नः भवति स्म रत्नपादः। इदानीं कठोरे सूर्यातपे, धाराकारवृष्टौ च कार्यं करणीयम् आपतितम्। एतत् बहु कष्टकरम् आसीत्। तथापि रत्नाकरः श्रद्धया परिश्रमेण च कार्यं कुर्वन् नवीनं जीवनम् अभ्यस्तवान्।

ग्रामे रत्नपादस्य व्ययः अपि अल्पः आसीत्। अतः सः सम्पादितेषु धनेषु किञ्चित् सञ्चयम् अपि कर्तुं शक्तवान्। एवमेव चत्वारि वर्षाणि अतीतानि। एतस्मिन् अवधौ सङ्गृहीतां सम्पत्तिं मूलधनत्वेन नियोज्य रत्नपादः वाणिज्यम् अपि आरब्धवान्।

एवम् एव दशवर्षाणि अतीतानि। एतावति

काले रत्नपादः अन्यविधवाणिज्यम् अपि आरभ्य लक्षशः रूप्यकाणि सम्पादितवान्। तेन धनेन एकम् उत्तमम् भवनम् अपि निर्मापितवान्। इदानीं सः समर्थवणिक्षु अन्यतमः। तदीयः ज्येष्ठपुत्रः इदानीं युवकः आसीत्। अत्युत्साही एषः वाणिज्यस्य दायित्वं स्वीकृतवान्। वाणिज्यतन्त्रं सम्यक् अभ्यस्य 'कुशलः वणिक्' इति कीर्तिं प्राप्तवान् च।

पूर्वं यः गोपीनाथः स्वपुत्रीं रत्नपादाय दातुं न अङ्गीकृतवान् आसीत्, सः स्वपुत्रीं पार्श्वग्रामस्थस्य एकस्य धनिकस्य पुत्राय दत्तवान्। तदीया कन्या इदानीं विवाहयोग्या आसीत्। गोपीनाथः इदानीम् इच्छति स्म यत् रत्नपादस्य पुत्राय स्वदौहित्री दातव्या इति। यतः सः इदानीं लक्षाधिपतिः, कुशलः वणिक् इति कीर्तिं प्राप्तवान् अस्ति च। 'एषः सम्बन्धः उचितः लाभदायकः च' इति गोपीनाथः चिन्तयन् आसीत्।

एकदा गोपीनाथः हंसपादेन मिलित्वा उक्तवान्- "मित्र! पूर्वं यत् प्रवृत्तं तत् गतम् एव। तत् स्मृत्वा दुःखप्रदर्शनं न उचितम्। दौर्भाग्यवशात् वयं तदा सम्बन्धिनः न जाताः। इदानीम् अहं मम दौहित्रीं भवतः पौत्राय दातुम् इच्छामि। पुनश्च सम्बन्धः वर्धताम् इति मम अभिलाषः" इति।

हंसपादः एतत् श्रुत्वा आलोचनायां मग्नः। सः तत् दिनं स्मृतवान् यद्दिने एषः एव



गोपीनाथः स्वपुत्रीं रत्नपादाय दातुं निराकृतवान् आसीत्। यतः तदानीं रत्नपादस्य पितुः समीपे लक्षशः रूप्यकाणि न आसन्। इदानीं तु रत्नपादस्य समीपे अपारा सम्पत्तिः अस्ति। अतः गोपीनाथः सम्बन्धम् इच्छति। 'एषः एव प्रतीकारार्थं समयः' इति चिन्तयित्वा हंसपादः कोपं प्रकटयन् उक्तवान्- "एतत् कदापि न सम्भवति। महाधनिकाः कोट्याधीशाः इदानीं मम पौत्राय कन्यां दातुं सिद्धाः सन्ति" इति।

एतन्मध्ये तत्र रत्नपादः आगतः। सर्वां वार्तां श्रुत्वा शान्तस्वरेण सः पितरम् उक्तवान्- "पितः! पूर्वं यत् प्रवृत्तं तत् विस्मर्तव्यम् अस्माभिः। इदानीं किं धनस्य अभावः अस्माकम्? किं वधूपक्षतः धनं प्राप्तव्यम् अस्ति वा?" इति।

अनन्तरं सः गोपीनाथस्य दौहित्र्याः वैवाहिकसम्बन्धम् अङ्गीकृतवान् ।

अनन्तरं गोपीनाथस्य दौहित्र्याः हंसपादस्य पौत्रस्य च विवाहः महता वैभवेन सम्पन्नः ।

वेतालः एवं कथां समाप्य अवदत्—"राजन्, पूर्वं गोपीनाथः रत्नपादस्य तस्य पितुः च अवमानं कृतवान् आसीत् । एवं स्थिते किमर्थं रत्नपादः गोपीनाथस्य पौत्रीं स्नुषात्वेन अङ्गीकृतवान् ? प्रतीकारार्थम् अवकाशे प्राप्ते अपि किमर्थं तस्य उपयोगं न स्वीकृतवान् ? एतादृशस्य व्यवहारस्य उद्देशः कः ? स्वकीयाम् उदारतां प्रकटयितुम् इच्छन् एवं कृतवान् वा ? उत कुबेरसदृशः गोपीनाथः सम्बन्धं स्थापयितुम् इच्छन् स्वगृहम् आगतवान् इति चिन्तयन् तथा कृतवान् ? एतस्य सन्देहस्य समाधानं जानन् अपि भवान् यदि न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भविष्यति" इति ।

तदा त्रिविक्रमः एवम् उक्तवान्— "प्रतीकारयोग्यं विशेषापराधं गोपीनाथः न कृतवान् । सः एकः अनुभवी लौकिकव्यवहारज्ञानयुतः च वणिक् । यथा शत्रुतायै समानस्तरः अपेक्षितः तथैव सम्बन्धस्थापनार्थम् अपि समानः स्तरः अपेक्षितः । एतेन विचारेण प्रेरितः रत्नपादः गोपीनाथस्य प्रस्तावम् अङ्गीकृतवान् ।

अन्यच्च रत्नपादः पूर्वं सामान्यः कृषिकः आसीत् । कालान्तरे स्वसामर्थ्येन श्रेष्ठः वणिक् जातः । अतः सः गोपीनाथस्य मानसिकीं स्थितिं ज्ञातुं शक्तवान् ।

रत्नपादस्य पिता तु कश्चित् सामान्यः कृषिकः । सः न जानाति स्म यत् धनं जनेषु अन्तरम् उत्पादयति इति । अतः सः गोपीनाथस्य अस्वीकृतिं स्वकीयम् अपमानं चिन्तितवान् । अतः एव प्रतीकारः करणीयः इति चिन्तितवान् । रत्नपादः तु महावणिक्, पण्डितः च । अतः सः प्रतीकारस्य विषयम् एव परित्यक्तवान् ।"

एवं वदता महाराजेन त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवे स्थितः वेतालः शवसहितः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।





# साधकलक्षणम्

चन्द्रपुरस्य भूस्वामिनः समीपे केशवस्वामी इति एकः सचिवः आसीत्। यदा सः वृद्धः जातः, तदा स्वयमेव सर्वाणि कार्याणि कर्तुम् अशक्तः अभवत्। अतः सः एकम् अनुचरम् अपेक्षितवान्। तदर्थं भूस्वामिनः अनुमतिम् अपि प्राप्तवान्। ततः समर्थस्य अनुचरस्य अन्वेषणार्थं प्रयत्नम् आरब्धवान्।

एतं वृत्तान्तं ज्ञात्वा रामभद्रः शिवचन्द्रः इति द्वौ भूस्वामिनः समीपम् आगतवन्तौ। द्वौ अपि अपेक्षितकार्यनिर्वहणे स्वीयं सामर्थ्यं निवेदितवन्तौ। तदा भूस्वामी केशवस्वामिनम् आहूय तयोः मध्ये एकं स्वीकर्तुम् आदिष्टवान्।

केशवस्वामी प्रथमं रामभद्रं स्वसमीपम् आहूय "पश्यतु भोः, सचिवालये विविधरूपाणि कार्याणि भवन्ति। प्रतिदिनम् अनेकसमस्याः पुरतः आपतन्ति। ताः समस्याः अपि भिन्न-भिन्नरूपाः भवन्ति। एकस्याः समस्यायाः परिहारः अन्यसमस्यायाः परिहारसमये निष्प्रयोजकः भवति" इति उक्तवान्।

तदा रामभद्रः–"आर्य, अनेकेषु तादृश-कार्यालयेषु कार्यं कृत्वा अहं पर्याप्तम् अनुभवं प्राप्तवान् अस्मि" इति उक्तवान्।

"सर्वे अपि सचिवालयाः समानरूपाः न भवन्ति किल? भवतः पूर्वानुभवेन अत्र प्रयोजनं भवति वा न वा अहं न जानामि। अहं तु मम सचिवालयस्य विषयं वदामि। अत्र दीर्घकालतः अवशिष्टानि बहूनि कार्याणि सन्ति। सर्वाणि तानि अस्तव्यस्तानि समस्या-भरितानि च सन्ति। तानि कार्याणि क्रमशः योजयितुं भवान् कीदृशं मार्गम् अनुसरति इति वदति वा?" इति केशवस्वामी पृष्टवान्।

"अहं परिष्कारयोग्याम् एकैकां समस्याम् एव गृहीत्वा तस्याः साधकबाधकविषयान् सम्यक् परिशीलयामि। ततः तस्याः निर्वहणरीतिं

निश्चित्य, अनन्तरम् एव कार्यस्य आरम्भं करोमि। एवंरीत्या सर्वेषाम् अपि कार्याणां परिष्कारसमये कोऽपि क्लेशः न भवति'' इति उक्तवान् रामभद्रः।

तं प्रेषयित्वा अनन्तरं सचिवः केशवस्वामी शिवचन्द्रम् आहूय, पूर्ववत् एव सचिवालयस्य विषयान् एव विवृत्य 'भवान् कथं परिष्करोति' इति अपि पृष्टवान्।

तदा शिवचन्द्रः ''अहं यस्याः कस्याः अपि समस्यायाः परिष्कारतः पूर्वं तस्याः सम्बन्धे कांश्चन प्रश्नान् परिकल्पयामि। तेषां प्रश्नानां समुचितसमाधानानि अपि चिन्तयित्वा, अनन्तरम् एव कार्यस्य आरम्भं करोमि। यदि कार्याणि बहूनि सन्ति, तर्हि तेषु कस्य प्राथम्यम् इत्यादिक्रमम् अपि निर्धार्य अनन्तरं कार्यं ग्रहीष्यामि'' इति उक्तवान्।

तम् अपि प्रेषयित्वा केशवस्वामी भूस्वामिनः समीपं गत्वा द्वयोः अपि कथनक्रमं वर्णितवान्। तदा भूस्वामी संदेहं प्रकटयन् 'किं द्वौ अपि समानौ वा?' इति पृष्टवान्। ''तथा न प्रभो! अस्मिन् उद्योगे नियोजयितुं शिवचन्द्रः एव अर्हः अस्ति। उत्तरोत्तरं सः समर्थः सचिवः भविष्यति'' इति उक्तवान् केशवस्वामी।

''एवं वा? अत्र शिवचन्द्रः एव अर्हः इति कथं निर्णीतः? तादृशवैशिष्ट्यं तस्मिन् किम् अस्ति?'' इति पृष्टवान् भूस्वामी।

''वैशिष्ट्यम् अस्ति। कार्यस्य आरम्भसमये कस्य प्राथम्यम् उचितम् इति सम्यक् समालोच्य तस्य साधकबाधकविषयान् तर्कयित्वा, तत्सम्बन्धि प्रश्नान् स्वयम् उत्थाप्य, तेषां समाधानानि अपि चिन्तनीयानि। एतत् एव समर्थकार्यसाधकस्य लक्षणम्। यदि वयं स्वयम् एव प्रश्नान् चिन्तयामः, तर्हि तेषां समाधानानां अन्वेषणे अपि क्लेशः न भवति। शिवचन्द्रे एतादृशलक्षणानि सन्ति। अतः सः एव अर्हः इति भावयामि'' इति उक्तवान् केशवस्वामी।

वृद्धसचिवस्य वचनं श्रुत्वा भूस्वामी शिवचन्द्रम् एव तस्य सहायकरूपेण नियोजितवान्।



# विमर्शकः

एकं राज्यम् । तत्र अतिकुशलाः पाञ्चालिकाकाराः आसन् । ते पक्षिणां वास्तविकपिच्छानि प्राणिनां नखानि चर्माणि च पाञ्चालिकासु योजयन्ति स्म । तेन ताः पाञ्चालिकाः वास्तविक-प्राणिनः इव दृश्यन्ते स्म । एकदा तस्य राज्यस्य राजा सहजवातावरणयुक्ते उद्यानवने पाञ्चालिका-प्रदर्शनीं समायोजितवान् ।

ताः पाञ्चालिकाः द्रष्टुं बहवः जनाः आगत्य तत्र सम्मिलितवन्तः । तेषु एकः विमर्शकः अपि आसीत् । सः तासां पाञ्चालिकानां समीपे स्थित्वा, पार्श्वस्थितजनान् उद्दिश्य विमर्शं कर्तुम् आरब्धवान् । पाञ्चालिकानां सहजताविषये सः व्याख्यानं करोति स्म ।

अन्ते सः विमर्शकः एकस्य आम्रवृक्षस्य समीपम् आगतवान् । तस्य वृक्षस्य शाखायाम् एकत्र शुकद्वयम् उपविष्टम् आसीत् ।

तत् शुकद्वयं दृष्ट्वा सः "शुकस्य चञ्चुवर्णः नाम कियान् मनोहरः भवति ! कुत्रापि एवं भवति वा ? वर्णानां मिश्रणज्ञानम् अपि नास्ति । तादृशः अज्ञः एतद् शुकद्वयं निर्मितवान् अस्ति । शुकयोः नेत्रस्थानेषु समीचीनानि काचनेत्राणि योजयितुम् अपि सः जानाति । एते पक्षाः वा ? एताः अङ्गुल्यः वा ?" इति उक्तवान् ।

अत्रान्तरे तयोः शुकयोः मध्ये एकः स्वीयं पक्षद्वयं पटपडाकृत्य आकाशं प्रति उड्डीय गतवान् । तस्य पक्षस्य स्पर्शतः अन्यः पाञ्चालिकाशिशुकः अधः पतित्वा छिद्रीभूतः जातः ।

तावत्पर्यन्तं विमर्शकस्य व्याख्यानं शृण्वन्तः तत्र स्थिताः उच्चैः हसितवन्तः ।

विमर्शकः लज्जया नतमस्तकः भूत्वा ततः निर्गतवान् ।





# पर्वतसदृशं धैर्यम्

रात्रौ द्वितीययामः आसन्नः आसीत्। तदा चत्वारः पथिकाः नौकायाम् उपविश्य नागावलि-नदीं तीर्त्वा अपरं तीरं प्राप्तवन्तः। तैः इतोऽपि क्रोशचतुष्टयं गत्वा विक्रमपुरं प्राप्तव्यम् आसीत्। तदर्थम् एकः अश्वशकटः सज्जी-भूतः अपि आसीत्।

चत्वारः अपि पथिकाः अश्वशकटम् आरुह्य तस्मिन् उपविष्टवन्तः। शकटः प्रस्थितः। घोरः अन्धकारः। अपि च भयङ्करम् अरण्यम्। मार्गमध्ये एकत्र एकः भल्लूकः तस्य द्वौ शावकौ च आगत्य शकटस्य पुरतः किञ्चित् स्थित्वा, ततः वेगेन पार्श्वस्थितवृक्षाणां मध्ये धावितवन्तः।

तान् दृष्ट्वा पथिकेषु एकः 'अस्माकं भाग्यं समीचीनम् अस्ति। अतः एते भल्लूकाः अस्माकम् उपरि आक्रमणं न कृतवन्तः। एतादृशसमये प्रयाणापेक्षया मूर्खतमं कार्यं अन्यत् किमपि नास्ति'' इति उक्तवान्।

तस्य वचनसमनन्तरम् एव अन्यः पथिकः ''शकटं स्थगयतु'' इति आज्ञारूपेण उच्चैः गर्जितवान्। शकटः स्थगितः। झटिति सः शकटतः उत्प्लुत्य, अतितीक्ष्णं खड्गं निष्कास्य, अन्येषां पुरतः प्रदर्शयन् ''अस्य चित्रहिंसकस्य नाम श्रुतवन्तः किल? व्याघ्रापेक्षया अपि अतिभयङ्करः। अस्मिन् घोरे अरण्यभागे मम वचनस्य पुरतः प्रतिवक्ता एव नास्ति। मम आज्ञां श्रुत्वा झटिति यः धनभूषणादिकं समस्तं समर्पयति, तस्य किमपि कष्टं न भवति। ये विलम्बं कुर्वन्ति, ये च साहाय्यार्थम् आक्रोशं कुर्वन्ति ते सर्वे अस्य खड्गस्य आहारभूताः भवन्ति। सर्वम् अवगतं खलु? भवतां समीपे यत् यत् अस्ति तत्सर्वम् तूष्णीं अत्र स्थापयन्तु'' इति उक्त्वा भूमौ एकं वस्त्रं प्रसारितवान्।

त्रयः अपि पथिकाः भयेन कम्पमानाः

स्वीयं धनं सुवर्णाभरणानि च दातुं प्रवृत्ताः। तदा शकटचालकः हस्तस्थितां कशां सशब्दं घूर्णयन्, तीव्रस्वरेण "रे! मार्गलुण्टाकः चित्रहिंसकः भवान् एव वा? शकटारोहणसमये एव भवतः चोरदृष्टिम् अहं लक्षितवान्। अनन्तरम् अपि एतावत्पर्यन्तं परीक्षितवान्। भवन्तं ग्रहीतुं पार्वतीपुरस्य भूस्वामीना प्रेषितः गुप्तचरः अहम् इति भवान् न जानाति। तिष्ठतु! भवतः प्रतापेन अलम्। अस्यां रात्रौ प्रस्थिताः एते सामान्यनागरिकाः इति मत्वा भवान् वञ्चितः। इदानीं भवतः अवतारसमाप्तिः भवति" इति उक्त्वा शकटतः उत्प्लुत्य चोरसमीपं गतवान्।

'भूस्वामिनः गूढचारः' इति वचनं श्रुत्वा चोरस्य शरीरं कम्पितम्। यथाकथञ्चित् सः यावत् धैर्यम् अवलम्बितुं प्रयतितवान्, तावत् शकटचालकः स्वीयां कशां तस्य खड्गयुक्तहस्तस्य उपरि प्रक्षिप्तवान्। तस्मिन् एव समये अन्ये त्रयः अपि पथिकाः चोरं आक्रम्य, तस्य खड्गं वशीकृत्य तं सम्यक् ताडितवन्तः। शकटचालकः रज्ज्वा चित्रहिंसकस्य हस्तौ पादौ च बद्धवान्। अनन्तरं चत्वारः अपि सम्भूय तं शकटे संस्थाप्य विक्रमपुरं प्रति प्रस्थिताः।

मार्गे पथिकेषु एकः शकटचालकम् उद्दिश्य "मार्गलुण्टाकं एतं चित्रहिंसकं बन्धितुम् अस्मिन् अरण्ये भवता शकटचालकस्य वेषः गृहीतः। बहुसमीचीनम् अभिनीतं च। भवान् भूस्वामिनः गूढचारः इति वयं पूर्वं न जानीमः स्म" इति उक्तवान्। "किन्तु तदा एषः चित्रहिंसकः न



लभ्यते स्म। एतदर्थम् अन्यौ द्वौ सेवकौ शकटम् अनुसर्तुं नियोजितौ। तौ कुतः न आगतवन्तौ इति चिन्तयन् आसम्। भाग्य-वशात् भवतां साहाय्येन एतं बन्धितुम् अहं शक्तवान्" इति उक्तवान् शकटचालकः।

विक्रमपुरं प्राप्तम्। शकटचालकः ग्रामाधि-कारिणः गृहस्य पुरतः शकटं स्थगितवान्। अनन्तरं द्वारं सशब्दं प्रहृतवान्। यदा द्वारम् उद्घाटय ग्रामाधिकारी बहिः आगतवान्, तदा शकटचालकः अन्ये च चित्रहिंसकं तस्य पुरतः आनीय क्षिप्तवन्तः। "साधु साधु! भवतः शकटे आगताः एते बहुधीराः इति भासते। एतं महाचोरं ग्रहीतुम् अहं बहुधा प्रयतितवान्। भवन्तः साधितवन्तः" इति सः उक्तवान्।

ग्रामाधिकारिणः वचनं श्रुत्वा पथिकाः "आर्य, एतं ग्रहीतुम् अपेक्षितं धैर्यं सामर्थ्यं वा अस्मासु कथं स्यात्? पार्वतीपुरस्य भूस्वामिनः गूढचारः शकटचालकस्य वेषं धृत्वा एतत् कार्यं साधितवान्। एषः नासीत् चेत् अस्माकं पर्वतसदृशं तादृशं धैर्यं कथं वा भवति स्म? अस्माकं धनाभरणादिकं सर्वम् एतेन रक्षितम्" इति सन्तोषेण उक्तवन्तः।

तेषां वचनं श्रुत्वा ग्रामाधिकारी आश्चर्यं प्रकटयन् शकटचालकं दृष्ट्वा "रे लक्ष्मण! किमिदं भोः? कदा आरभ्य भवान् भूस्वामिनः गूढचारः जातः" इति पृष्टवान्।

शकटचालकः प्रवृत्तं सर्वं वृत्तान्तं कथयित्वा "अहम् एकमेव सूत्रं जानामि। आपत्काले यदि एकः धैर्येण उत्तिष्ठति, तर्हि अन्ये अपि धैर्यं प्राप्नुवन्ति इति। वयं चत्वारः स्मः। सः एकः। अस्माभिः सः न गृह्यते चेत् लज्जा-स्पदं न भवति वा? अतः एव 'अहं भूस्वामिनः गूढचारः' इति मया उक्तम्" इति उक्तवान्।

ग्रामाधिकारी शकटचालकं लक्ष्मणं बहु श्लाघितवान्। एतं वृत्तान्तं श्रुत्वा पार्वतीपुरस्य भूस्वामी अपि परेद्युः बृहत्सभायां लक्ष्मणस्य धैर्यं समयस्फूर्तिं च श्लाघितवान्। तथा बहुमूल्यं बहुमानम् अपि तस्मै दत्तवान्।





# पापस्य फलम्

पूर्वं ब्रह्मदत्तः काशीं परिपालयन् आसीत्। तेषु दिनेषु बोधिसत्वः सुशान्तनाम्ना दरिद्र-कृषिकरूपेण जन्म प्राप्तवान्। यदा सः युवकः जातः तदा गृहस्य सम्पूर्णम् उत्तरदायित्वं स्वीकृत्य मातापित्रोः पालनं कृतवान्। अल्पे एव काले तदीयः पिता दिवङ्गतः।

सुशान्तः यावत् सम्पादयति तत् तदीय-कुटुम्बपोषणे अपर्याप्तं भवति स्म। तथापि सः कथञ्चित् दिनानि यापयति स्म।

तद्देशस्य महाराजस्य मृगयाविहारे महती आसक्तिः। सः तदा तदा अरण्यं गत्वा मृगयायां निरतः भवति स्म। एकदा राजा एकं हरिणम् अनुसृत्य धावन् बहुदूरं गतवान्। अन्ते बाणं प्रयुज्य हरिणं मारितवान्। महाराजेन सह कोऽपि अन्यः भटः न आसीत्। अतः राजा स्वयं हरिणं स्कन्धस्य उपरि आरोप्य राजधानीं प्रस्थितः।

मध्याह्नसमयः आसीत्। तीव्रः आतपः बाधते स्म। हरिणम् अनुसृत्य धावनेन राजा अतीव श्रान्तः आसीत्। मार्गे तेन एकः विशालः वटवृक्षः दृष्टः। वृक्षस्य अधः हरिणम् एकत्र संस्थाप्य राजा विश्रान्त्यर्थं स्वपादौ प्रसारितवान्।

तदा अकस्मात् काचन ब्रह्मराक्षसी प्रत्यक्षीभूय राजसमीपम् आगत्य उक्तवती- "अहं भवन्तं खादामि इदानीम्" इति।

"भवती का? मां खादितुं भवत्याः कः अधिकारः?" इति पृष्टवान् महाराजः।

"अहम् एका ब्रह्मराक्षसी। अस्मिन् वृक्षे निवसामि। अस्य वृक्षस्य अधः यः पादौ स्थापयति, अथवा छायाप्रदेशे वा आगच्छति तं खादितुं मम अधिकारः अस्ति" इति राक्षसी उक्तवती।

राजा तदा गम्भीरतापूर्वकं किञ्चित् चिन्ति-

"जातककथा"



तवान्। तदा तस्य मनसि एकः उपायः स्फुरितः। सः ब्रह्मराक्षसीम् उक्तवान्– "भवती केवलम् अद्यतनम् आहारम् इच्छति, उत प्रति-दिनम् अपि ?"

"अहं तु प्रतिदिनम् अपि आहारम् इच्छामि" इति उत्तरं दत्तवती राक्षसी।

"एवं स्थिते, अद्य भवती मां खादति चेत् भवत्याः आहारसमस्या कथं परिहृता भविष्यति? यदि अद्य भवती एतं हरिणं खादित्वा मां त्यजति, तर्हि अहं भवत्याः दैनान्दिनीम् आहार-समस्यां परिहरिष्यामि। अहम् अस्य देशस्य राजा अस्मि। अतः प्रतिदिनम् अपि पर्याप्तेन अन्नेन सह एकैकं पुरुषम् अपि प्रेषयितुं शक्नोमि" इति उक्तवान् राजा।

एतेन प्रस्तावेन सन्तुष्टा ब्रह्मराक्षसी उक्त-वती- "तर्हि अहं भवन्तं त्यजामि। किन्तु एकः नियमः– यद्दिने अहं समये आहारं न प्राप्नोमि तद्दिने स्वयम् आगत्य भवन्तं खादामि" इति।

अनन्तरं राजा हरिणं ब्रह्मराक्षस्याः वशे समर्प्य राजधानीं प्रत्यागतवान्। मन्त्रिणं सर्वं वृत्तान्तं निवेदितवान् च।

मन्त्री राजानम् उक्तवान्- "महाराज! भवान् चिन्तां न करोतु। अस्माकं कारागारे बहवः बन्दिजनाः सन्ति। प्रतिदिनम् एकैकं ब्रह्मराक्षस्याः आहाररूपेण प्रेषयिष्यामि" इति।

तद्दिनात् आरभ्य मन्त्री एकैकं बन्दिजनम् अरण्यस्य तत् वृक्षस्य समीपम्, अन्नेन सह प्रेषितवान्। ब्रह्मराक्षसी तं पुरुषं खादितवती च। किञ्चित्कालं यावत् एषः एव क्रमः प्रचलन् आसीत्।

अल्पे एव काले कारागृहं रिक्तं जातम्। तदा मन्त्री भीतः। इदानीं किं करणीयम् इति सः न जानाति। सः राज्ये डिण्डिमघोषं कारितवान्- "यः आहारवस्तूनि स्वीकृत्य राक्षस्याः समीपं गच्छति तस्मै राजा एकसहस्र-रूप्यकात्मकं पारितोषिकं ददाति" इति।

एतं डिण्डिमघोषं श्रुत्वा सुशान्तः चिन्तित-वान्- "अरे! कीदृशः सदवकाशः एषः! अहं तु महता परिश्रमेण कार्यं करोमि चेदपि चत्वारि नाणकानि सङ्ग्रहीतुं न शक्नोमि। किन्तु इदानीं ब्रह्मराक्षस्यै आहारं नयामि चेत्

सहस्रं रूप्यकाणि !"

एवं चिन्तयित्वा सुशान्तः मातुः समीपं गत्वा उक्तवान्- "अम्ब? अहं ब्रह्मराक्षस्यै आहारं नयामि। एतत्कार्यार्थं सहस्रं रूप्यकाणि लभ्यन्ते। तेन धनेन भवत्याः जीवनं आजीवनं सुखमयं भविष्यति" इति।

"पुत्र ! इदानीं मम जीवने का न्यूनता अस्ति ? धनार्थम् अहं पुत्रस्य बलिं ददामि वा ? आहारं स्वीकृत्य यः गच्छति तं ब्रह्मराक्षसी खादिष्यति इति भवान् न जानाति वा ?" इति पृष्टवती सुशान्तस्य माता।

"मातः ! मम काऽपि हानिः न भविष्यति। अहं सुरक्षितम् गृहं प्रत्यागमिष्यामि। चिन्तां न करोतु भवती" इति मातरम् उक्त्वा साक्षात् महाराजस्य समीपं गतवान् सुशान्तः।

सः महाराजम् उक्तवान्- "महाराज ! यदि भवान् भवदीयं छत्रं, खड्गं, पादरक्षायुगलम्, एकं सुवर्णपात्रं च मह्यं ददाति तर्हि अहं ब्रह्मराक्षस्याः कृते आहारं नयामि" इति।

राजा आश्चर्येण पृष्टवान्- "आहारवस्तूनि नेतुम् इच्छते भवते एतानि वस्तूनि किमर्थम् ?"

"ब्रह्मराक्षसीं पराजेतुम्" इति दृढस्वरेण उक्तवान् सुशान्तः। अनन्तरं सुशान्तः महाराजेन दत्तां पादरक्षां धृत्वा, खड्गं कटौ बद्ध्वा, हस्तयोः छत्रं सुवर्णपात्रे अन्नं च गृहीत्वा, मध्याह्नसमये वृक्षसमीपं गतवान्। तत्र वृक्षस्य समीपे एव छत्रस्य छायायाः अधः उपविष्टवान्।




ब्रह्मराक्षसी बहुकालपर्यन्तं निरीक्षां कृतवती। किन्तु सुशान्तः वृक्षस्य छायायां न आगच्छति। राक्षसी किञ्चिदिव दिग्भ्रान्ता। सा सुशान्तम् उक्तवती- "भवान् बहुदूरतः आतपे आगतः। वृक्षस्य छायायाम् विश्रान्तिसुखम् अनुभवतु तावत्" इति।

"नैव, मया त्वरया गन्तव्यम् अस्ति। स्वीकरोतु, भवत्याः आहारम्" इति वदन् सुशान्तः सुवर्णपात्रं आतपे एकत्र स्थापितवान्। खड्गस्य साहाय्येन तत् पात्रं वृक्षस्य छायायां स्थापितवान् च।

तदा सा क्रोधमिश्रितस्वरेण गर्जितवती- "अहम् आहारेण सह तदानेतारं पुरुषम् अपि खादामि इति भवान् न जानाति वा ?" इति।

"किन्तु भवती जानातु यत् मां खादितुं न शक्नोति भवती। अहं भवत्याः वृक्षस्य छायायां न आगतवान् एव। अतः मा खादितुं भवत्याः अधिकारः एव नास्ति" इति।

"एषा वञ्चना। महती वञ्चना। प्रतिदिनम् एकं पुरुषम् आहाररूपेण प्रेषयिष्यामि इति महाराजेन वचनं दत्तम् आसीत्। किन्तु इदानीं भवत्कारणतः तत् च वचनं भग्नम्। अत्र महाराजस्य पात्रं किमपि अस्ति वा, उत भवान् एव स्वविचारानुसारम् एवम् आचरन् अस्ति वा इति अहं न जानामि। अथवा भवता सह मम कः व्यवहारः? वचनभङ्गेन किं भविष्यति इति अहं महाराजं ज्ञापयामि। इदानीं साक्षात् अहं राजधानीं गत्वा महाराजम् एव खादामि" इति राक्षसी आक्रोशनं कृतवती।

"अये महाभागे! पूर्वजन्मनि कृतस्य पापस्य कारणतः भवती इदानीं राक्षसजन्म प्राप्तवती अस्ति। इदानीम् अपि विवेकः न उदितः वा? स्वजीवनं सम्यक् परिशीलयतु। उत्तमं जन्म प्राप्तुं कथं शक्यते इति प्रथमं चिन्तयतु। पापाचारेण इतोऽपि नीचतमं जन्म प्राप्यते इति स्मरतु" इति सुशान्तः सम्यक् उपदेशं दत्तवान्।

इदानीं ब्रह्मराक्षसी चिन्तायां मग्ना। सुशान्तस्य वचनैः सा प्रभाविता अस्ति। किन्तु विकासः कथं प्राप्तव्यः इति सा न जानाति। अन्ते व्यथापूर्णेन स्वरेण सा पृष्टवती– "मित्र! मया किं करणीयम्? उत्तमं जीवनं प्राप्तुं कः मार्गः" इति।

"भवती इतः प्रस्थाय अस्माकं नगरस्य द्वारसमीपे निवसतु। तत्र अहं प्रतिदिनं भवत्याः कृते सात्त्विकस्य आहारस्य व्यवस्थां कारयामि। नरमांसभक्षणं भवती सर्वथा त्यजतु। जनहितकार्याणि किमपि कर्तुं शक्यते वा इति चिन्तयतु" इति उक्तवान् सुशान्तः।

ब्रह्मराक्षसी सुशान्तवचनम् अङ्गीकृतवती।

'सुशान्तः सजीवं प्रत्यागतः' इति ज्ञात्वा राजा आश्चर्यचकितः। सुशान्तः अरण्ये प्रवृत्तं सर्वं महाराजाय निवेदितवान्। परमानन्दितः राजा सुशान्तं सेनापतिस्थाने नियोजितवान्।





# स्वातन्त्र्य-सङ्ग्रामः

अस्मदीयः भारतदेशः संस्कृत्या तत्वज्ञानेन च प्रसिद्धम्। एतस्य देशस्य उपरि केचन विदेशीयाः शासनम् आरब्धवन्तः। तेषां शासनं विरुध्य समग्रे देशे आन्दोलनम् आरब्धम्। नवचैतन्यस्य तरङ्गाः सर्वत्र व्याप्ताः। इंग्लेण्डदेशे अध्ययने निरताः केचन भारतीयाः 'लोटस्-एण्ड्-द-डागर नामकसंस्थां संस्थाप्य, भारतस्य स्वातन्त्र्यार्थं प्रयत्नम् आरब्धवन्तः।

तेषु दिनेषु बंगालप्रान्तः प्लेग्रोगव्याप्तः आसीत्। तदा ब्रिटिष् सैनिकाः जनान् बहुधा पीडितवन्तः, अवमानितवन्तः च। एतत् विरुध्य बालगङ्गाधरतिलकः (१८५७–१९२०) प्रबलम् आन्दोलनं समायोजितवान्। अल्पे एव काले एषः जनप्रियः राष्ट्रियनेता सञ्जातः।





१९०६तमे वर्षे सूरतनगरे राष्ट्रियकांग्रेस् महासभायाः अधिवेशनम् प्रवृत्तम्। अस्यां सभायां तिलकमहोदयः अरविन्दघोषः च प्रतिपादितवन्तौ यत् भारतं सम्पूर्णतया स्वयंशासनाधिकारं प्राप्नुयात् इति। किन्तु केचन नायकाः एतस्य प्रस्तावस्य समर्थने सङ्कोचम् अनुभूतवन्तः। अतः अरविन्दस्य अध्यक्षतायाम् अन्यः एव समावेशः आयोजितः। तत्र तिलकः पूर्वोक्तं प्रस्तावम् उपस्थापितवान्।



अल्पे एव काले अरविन्दः तीव्रगामिनां नायकः जातः। सः विदेशीयवस्तुनां बहिष्कारः राष्ट्रियरक्षापद्धतेः स्थापनम् ग्रामस्तरे जनैरेव विवादानां परिहारः, जनसैन्यम्, इत्यदिभिः योजनाभिः एव आंग्लशासनस्य विरोधं कृतवान्। एतेन क्रोधतप्ताः आंग्लसैनिकाः उग्रवादिनाम् उपरि आक्रमणं कृत्वा, तान् निष्ठुरं पीडितवन्तः।

१९२०तमे वत्सरे अरविन्दः राजकीय-क्षेत्रं परित्यज्य आध्यात्मिकजीवनम् अङ्गीकृतवान्। तथापि पूर्वं तेन प्रतिपादितस्य अंशस्य आधारेण क्रान्तिः सजीवा आसीत्। क्रान्तिकारिणां नेता बाघा जतीनः तदीयाः अनुचराः च बालासोरसमीपे आंग्लसेनां विरुध्य युद्धं कुर्वन्तः प्राणान् समर्पितवन्तः।






केनडावासिनः पञ्जाबप्रदेशीयाः स्वातन्त्र्यसङ्ग्रामार्थं गदरपार्टी नाम संस्थां स्थापितवन्तः। ३७२ प्रयाणिकैः सहितायाः लोमगटमारु नामिकायाः नौकायाः प्रवेशः बावान्वरनौकास्थाने निषिद्धः अभवत्। यतः तस्यां नौकायां गदरपक्षसमर्थकाः क्रान्तिकारिणः स्युः इति अधिकारिणां सन्देहः आसीत्। अतः नौका कलकत्तां प्रत्यागता। तत्र सर्वे प्रयाणिकाः आंग्लेयसैनिकैः गोलकास्त्रप्रयोगेण मारिताः।

दक्षिण-आफ्रिकायां गान्धी, आंग्ल-शासनस्य दमननीतिम्, अत्याचारं च विरुध्य सत्याग्रहं कृतवान्। १९०४तमे वत्सरे एषः भारतं प्रत्यागत्य स्वातन्त्र्यप्राप्त्यर्थं 'सत्याग्रह' नामिकां नवीनपद्धतिं सुदृढं प्रतिपादितवान्। एषः बिहारप्रान्ते कृषिककर्मकराणां सङ्घटनं सम्पाद्य स्वार्थसाधकानां वणिजां विरोधं सम्मुखीकृतवान्।





स्वातन्त्र्यसङ्ग्रामस्य केचन नायकाः बन्दीभूताः। एतद्विषये शान्तिपूर्वकम् असम्मतिं सूचयितुं १९१९ एप्रिल् १३ दिनाङ्के सहस्रशः जनाः अमृतसरस्य जालियन्वालाबाग् प्रदेशे सम्मिलिताः। सम्मिलितेषु स्त्रियः बालाः च अधिक-सङ्ख्यया आसन्। तेषु दिनेषु अमृतसरस्य शासनाधिकारः जनरल् डयरनामकस्य आंग्लसेनाधिपतेः अधीने आसीत्।

तत्प्रदेशे सभां चालयितुं काऽपि अनुपपत्तिः पूर्वं न प्रदर्शिता आसीत्। किन्तु जनरलडयरमहोदयः शस्त्रधारिभिः नवतिसैनिकैः सह अकस्मात् तत्र आगतवान्। पूर्वसूचनां विना जनानाम् उपरि गोलकास्त्रं प्रयोक्तुम् आज्ञापितवान्। अत्र ३७९ जनाः मृताः १२०८ जनाः व्रणिताः इति शासकीयगणनानुसारं ज्ञायते।





जालियन्वालाबाग्प्रदेशे– यत्र महत् 'जनहत्याकाण्डं' प्रवृत्तम् आसीत्–, इदानीं हुतात्मनां स्मारकम् निर्मितम् अस्ति। देशस्य स्वातन्त्र्यार्थं सर्वमतीयाः सर्वप्रदेशीयाः च यत् प्राणार्पणं कृतवन्तः, तेषां स्मरणार्थं स्थापितम् एतत् स्मारकम् अद्यापि पूर्वजानां त्यागं बलिदानं च स्मारकति।

स्वातन्त्र्ययोद्धारः बहवः तेषु दिनेषु भीकररोगैः व्याप्तम् अण्डमान्द्वीपम् प्रेषिताः। तत्र एते अनेकैः रोगैः पीडिताः, वेदनाम् अनुभवन्तः प्राणान् त्यक्तवन्तः।





एतन्मध्ये महात्मा गान्धी, स्वातन्त्र्यसङ्ग्रामस्य नेतृत्वम् अङ्गीकृतवान्। एतस्य आगमनेन आन्दोलनेन नावीन्यं प्राप्तम्। लवणनिर्माणस्य विषये अपि आंग्लेयाः करं विहितवन्तः। तदा गान्धी महोदयस्य आदेशनुसारं सहस्रशः जनाः विरोधं प्रकटितवन्तः। लवणसत्याग्रहे भागं गृहीत्वा कारागारं प्रविष्टवन्तः च। कारागारे तैः बहुविधकष्टानि सोढव्यानि आपतितानि।



# सुखी कः ?

प्राचीनकाले मालवदेशे पुष्करनामकः राजा शासनं करोति स्म । यद्यपि एषः महाराजः, किन्तु भोगविलासेषु अत्यासक्तः । स्तुतिपाठकाः सर्वदा तस्य पार्श्वे भवन्ति एव । ते पारितोषिकलाभार्थं मिथ्याप्रशंसां कुर्वन्ति स्म– "महाराज ! भवतः ऐश्वर्यम् इन्द्रस्य ऐश्वर्यम् अपि अतिशेते । भवतः कोषागारस्य तुलनया कुबेरस्य धनागारम् अल्पम् एव । 'जगति सुखी कः' इति प्रश्नस्य उत्तररूपेण भवतः नाम एव प्रथमं गणनीयम् । अनन्तरम् अन्येषां नाम गणनीयम्..." इत्यादि ।

एवं मिथ्याप्रशंसां कुर्वन्तः ते स्वार्थं सम्पादयन्ति स्म । तेषां प्रशंसया उन्मत्तः राजा चिन्तयति स्म यत् प्रायः मादृशः भोगी सुखी च अन्यः कोऽपि नास्ति इति ।

एकदा ज्ञानधनः नाम एकः महात्मा तस्य आस्थानम् आगतवान् । तस्य योग्यताविषये राजा पूर्वम् एव श्रुतवान् आसीत् । अतः सः ज्ञानधनम् उक्तवान्- "महात्मन् ! भवतः आगमनेन मम राज्यं पवित्रीकृतम् " इति । एवम् उक्त्वा राजा अर्घ्यपाद्यादिसत्कारपूर्वकं सन्यासिनः आतिथ्यं कृतवान् । तद्दिने सङ्गीतसमारोहम् अपि आयोजितवान् । कवीनां द्वारा काव्यगोष्ठीं, नर्तकैः द्वारा भव्यं नृत्यप्रदर्शनम् अपि समायोजितवान् ।

ज्ञानधनः एतत्सर्वं दृष्ट्वा अपि मौनं स्थितवान् आसीत् । महाराजस्य निरीक्षा आसीत् यत् इतरे इव एषः अपि मम वैभवस्य प्रशंसां करोतु इति । किन्तु ज्ञानधनस्य मौनं दृष्ट्वा महाराजस्य उत्साहः स्वयं शान्तः । अन्ते राजा एव स्वयं पृष्टवान्– "महात्मन् ! भवान् अनेकदेशेषु सञ्चारं कृतवान् किल ? माम् अतिरिच्य सुखी कोऽपि भवता कुत्रापि दृष्टः वा ?" इति ।

तदा ज्ञानधनः उक्तवान्– "अस्माकं ग्रामे

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा ।'



प्रतापः नाम एकः आसीत् । सः सर्वापेक्षया अधिकं सुखी इति वक्तुं शक्यते'' इति ।

''प्रतापः ? कः सः ? अद्यावधि मया नाम अपि न श्रुतम् । एतादृशः अज्ञातः कश्चित् मम अपेक्षया अधिकं सुखी कथं भवेत् ? एतत् तु आश्चर्यस्य विषयः एव'' इति उक्तवान् राजा ।

''प्रतापः भवान् इव कीर्तिमान् न इति तु सत्यम् एव । किन्तु सः सुखी इत्यत्र संशयः नास्ति । सः परिश्रमेण धनं सम्पाद्य पत्नीपुत्रादीनां पोषणं कृतवान् । पौत्रान् अङ्केषु उपवेश्य लालितवान् । उन्नतिम् अवनतिं च विना समरसं जीवनं यापितवान् सः । अन्ते षष्टितमे वयसि सः स्वमातृभूमिनिमित्तके युद्धे सद्गति प्राप्तवान्'' इति उक्तवान् ज्ञानधनः ।

'' अस्तु नाम, प्रतापानन्तरं वा अहं गणनायां प्रविशामि किल ?'' इति राजा किञ्चित् असमाधानेन पृष्टवान् ।

''नैव श्रीमन्, प्रतापानन्तरं तदीयौ सहोदरौ गणनीयौ । तौ अपि ग्रामवासिनौ एव । दृढं शरीरम् आसीत् तयोः । सहृदयौ परोपकारिणौ च तौ अन्तिमकाले कामपि याचनां विना हसन्तौ मरणं स्वागतीकृतवन्तौ । अतः द्वितीयं तृतीयं स्थानं तयोः'' इति ज्ञानधनः उक्तवान् ।

एतेन राजा कुपितः । सः कोपेन उक्तवान्- ''भवान् एकः महान् पुरुषः इति चिन्तयन् अहं भवतः अभिप्रायं पृष्टवान् । किन्तु भवतः मुखतः एतादृशानि लघुवचनानि ! भवतः व्यक्तित्वस्य अनुचितम् एतत् । निर्धनिकाः कदाचित् मम अपेक्षया अधिकं सुखेन जीवेयुः वा ? श्रोतारः उपहसेयुः'' इति ।

ज्ञानधनः मन्दहासं प्रकटयन् उक्तवान्- ''राजन् ! कोपः किमर्थं ? ऐश्वर्यं, वैभवम्, इत्यादिकं सद्यःकाले सुखं यच्छति इति तु सत्यम् एव । किन्तु भवता एतत् न विस्मर्तव्यम् यत् एतानि न हि शाश्वतिकानि । भवान् एवम् एव कति दिनानि यावत् सुखम् उपभोक्तुं शक्नोति इति कः वदति ? अन्तिमसमयपर्यन्तम् अपि भवतः जीवनं सुखमयम् एव भवेत् इत्यत्र कः निश्चयः ? सर्वं दैवाधीनम्'' इति । अनन्तरं सः ज्ञानधनः ततः

निर्गतः ।

"प्रभो! वृद्धस्य तस्य वेषेण भवान् वञ्चितः । अतः एव बहु आदरं प्रदर्शितवान् । भवतः वैभवस्य सुखस्य च विषये सः सन्यासी किं वा जानीयात्? प्रपञ्चे परमसुखी भवान् एव, न अन्यः । महाराजः पुष्कलः जयतात् !" इत्येवं वदन्तः आस्थानिकाः स्तुतिपाठकाः इव महाराजं सन्तोषितवन्तः । ज्ञानधनस्य वचनं स्वप्नं मन्यमानः महाराजः अपि तत् प्रकरणं क्रमशः विस्मृतवान् ।

एकवर्षम् अतीतम् । एकस्मिन् दिने पुष्कलः गाढनिद्रायां निमग्नः आसीत् । तदा "शत्रवः अन्तःपुरं प्रविष्टाः सन्ति । शत्रवः आगताः" इति कोलाहलः कश्चन श्रुतः । तेन सर्वे आश्चर्यचकिताः । तदा राजभटः कश्चन धावन् आगत्य उक्तवान्- "प्रभो ! माण्डलिकः राजा महाबलः सेनया सह आगत्य दुर्गम् आक्रान्तवान् अस्ति" इति ।

अपरक्षणे "राजा महाबलः जयतात्" इति वदन्तः दुर्गस्य अन्तः प्रविष्टाः शत्रुसैनिकाः पुष्कलेन दृष्टाः ।

पुष्कलः चिन्तितवान्- 'एकक्षणस्यापि विलम्बेन प्राणहानिः एव स्यात्' इति । एवं चिन्तयन् सः राजोचितं वेषं निष्कास्य साधारणं वस्त्रं धृतवान्, पलायनसूत्रं पठितवान् च । तावति काले शत्रुसेनापतिः उच्चैः उक्तवान्- 'कश्चित् पलायमानः अस्ति । तं गृह्णन्तु' इति । एतन्मध्ये कश्चित् शत्रुसैनिकः एतं साधारणं सैनिकं मत्वा एतस्य शिरः छेत्तुं खड्गं स्वीकृत्य उद्युक्तः । तदा पुष्कलः शत्रुसैनिकस्य पुरतः आगत्य उक्तवान्- "मां मारयति? पश्यामः तावत् भवतः शौर्यम्" इति ।



तस्मिन् समये महाराजस्य पार्श्वे तदीयः पुत्रः आसीत्, यश्च जन्मतः मूकः । सः पितरम् आपदा ग्रस्तं ज्ञात्वा उच्चैः उक्तवान्- "एषः मम पिता पुष्कलमहाराजः । एतं न मारयतु" इति । एतत् अत्याश्चर्यकरम् आसीत् यत् भीत्या, मूकस्य राजकुमारस्य मुखतः शब्दाः निर्गताः आसन् । महाराजस्य वधार्थम् उद्युक्तः सैनिकः शान्तः जातः । सः महाराजं बन्दीकृत्य स्वराजस्य महाबलस्य समीपं नीतवान् ।

महाबलः चिन्तितवान्- 'यदि शत्रुः सजीवं तिष्ठति तर्हि तत् अपायकरम् एव' इति। अतः सः स्वसैनिकान् आज्ञापितवान्- 'एतं सजीवं ज्वालयित्वा मारयन्तु' इति।

महाबलस्य आदेशानुसारं तदीयाः सैनिकाः शुष्ककाष्ठानि यथेष्टं सङ्गृहीतवन्तः, एकत्र राशीकृतवन्तः च। एतन्मध्ये महाराजं पुष्कलं स्थापितवन्तः। एतत् दृश्यं द्रष्टुम् बहवः जनाः सम्मिलिताः आसन्, ये पुष्कलस्य प्रशंसाम् अहोरात्रं कुर्वन्तः आसन्।

पुष्कलः चतसृषु दिक्षु एकवारं स्वदृष्टिं प्रसारितवान्। दुर्गम् अन्तःपुरम्, भवनानि, उद्यानवनम्, इत्यादिकं सर्वं तस्य मनःपटले चलनचित्रे इव आगत्य गतानि। एतद्विषये चिन्तयतः तस्य नेत्रतः अश्रूणि निर्गतानि।

"इदानीं किमपि वस्तु मदीयं न। अल्पे समये अविचिन्तितं परिवर्तनम्! महाराजस्य वैभवपूर्णजीवनं यापयतः मम अन्तिमकाले एतादृशं घोरं मरणं सन्निहितम्। ज्ञानधनः सत्यम् एव उक्तवान् यत् जगति किमपि शाश्वतं न इति। ज्ञानधनस्य वाक्यानि सुवर्णाक्षरेषु लेखितुं योग्यानि" इति राजा चिन्तयन् आसीत्। तावति एव काले काष्ठेषु अग्निस्पर्शः कृतः।

उद्गच्छन्तं दुःखं राजा निरोध्दुं नैव शक्तः। सः उच्चैः आक्रोशनं कृतवान्- 'अये ज्ञानधन! ज्ञानधन!' इति। एतं शब्दं श्रुत्वा महाबलः पृष्टवान्- 'ज्ञानधनः कः?' इति।

तत्र उपस्थिताः जनाः पूर्वतनं सर्वं वृत्तान्तं महाबलाय निवेदितवन्तः। तदा महाबलः चिन्तयितुम् आरब्धवान्- "एतत् तु सत्यम्। कस्य गतिः कदा का भविष्यति इति कः वा जानाति? इदानीम् अहम् आत्मानं महान्तं चिन्तयन् अस्मि। 'भविष्ये मम गतिः का?' इति अहं न जानामि एव। वस्तुतः एतस्य पुष्करस्य मरणदण्डनं दातुम् अहं कः?" इति।

एवं चिन्तयन् महाबलः पुष्कलस्य प्राणान् रक्षितवान्।





# न्यायपूर्वकंसम्पादनम्

गणेशः विंशतिवर्षीयः युवकः। सः अधिकं विद्याभ्यासं न कृतवान् असीत्। किन्तु कार्येषु सः दक्षः। व्यवहारः च तस्य सुमधुरः। अतः सर्वे ग्रामीणाः तद्द्वारा कार्यं कारयन्ति स्म। गणेशस्य दाक्षिण्यस्वभावः। अतः परिश्रमस्य प्रतिफलत्वेन ग्रामीणैः यावत् दीयते तावदेव विनाविरोधं स्वीकरोति स्म। एवं बहुत्र सः परिश्रमानुगुणं धनं न प्राप्नोति स्म। एतेन जीवनिर्णह्णार्थं सः प्रतिदिनम् अपि कष्टम् अनुभवति स्म।

तस्मिन् ग्रामे रमा नाम एका षोडशवर्षीया युवतिः आसीत्। गणेशः तया आकृष्टः। रमा अपि गणेशं मनसा इच्छति स्म। एतयोः मनोभावं रमायाः पिता गङ्गाधरः ज्ञातवान्। सः गणेशम् आहूय उक्तवान्- "अये, भवतः तु दाक्षिण्यस्वभावः। अतः भवान् कदापि पत्नीं सुखेन न पालयिष्यति। यदि भवतः समीपे एकरद्वयमिता भूमिः स्यात् तर्हि अहं मदीयां पुत्रीं दातुं शक्नुयाम्" इति।

गङ्गाधरस्य वचनं श्रुत्वा गणेशः चिन्तामग्नः। रमा गणेशम् एकान्ते दृष्ट्वा उक्तवती- "भीतिः मास्तु। वस्तुतः मम पिता न कुपितः। यदि भवान् उत्तमां वेष्टीम् आनीय दास्यति तर्हि सः सन्तुष्टः भविष्यति। विवाहार्थं अनुमतिं दास्यति च" इति।

गणेशः तद्दिने एव ग्रामे प्रसिद्धस्य धनिकस्य समीपं गत्वा 'उत्तमवेष्टीं ददातु' इति प्रार्थितवान्।

धनिकः निस्सङ्कोचम् उक्तवान्- "भवान् उत्तमवेष्टीम् इच्छति वा? अवश्यं ददामि अहम्। किन्तु तदर्थं भवता चत्वारि सुवर्ण–नाणकानि दातव्यानि। यदा धनं ददाति तत्क्षणे एव अहं वेष्टीं ददामि" इति।

इतःपूर्वं गणेशः धनिकस्य गृहे बहूनि



कार्याणि कृतवान् आसीत्। तदर्थं योग्यं वेतनं धनिकः कदापि न दत्तवान् आसीत्। एतद्विषये गणेशः अपि विशेषध्यानं न दत्तवान् आसीत्। इदानीम् एषः एव धनिकः एकां वेष्टीम् दातुम् अपि असम्मतिं सूचयन् अस्ति।

वराकः गणेशः किं वा कर्तुं शक्नुयात्? अनन्तरं सः ग्रामप्रमुखान् बहून् एतद्विषये प्रार्थितवान्। किन्तु कोऽपि चत्वारि सुवर्णनाणकानि दातुं सिद्धः अभवत्। एतेन गणेशः निराशः जातः।

अनन्तरं गणेशः महता परिश्रमेण आहारादिकम् अपि त्यक्त्वा सप्ताहद्वयाभ्यन्तरे कथञ्चित् चत्वारि सुवर्णनाणकानि सङ्गृहीतवान्।

तदनन्तरं सः तानि नाणकानि स्वीकृत्य धनिकस्य गृहं गतवान्। धनं दत्त्वा उत्तमां वेष्टीं क्रीतवान्। तां वेष्टीं स्वीकृत्य रमायाः गृहं गतवान्। उत्तमवेष्टीं दृष्ट्वा रमाया पिता गङ्गाधरः बहु सन्तुष्टः। सः उक्तवान्- ''बहोः कालात् अनन्तरं मम इच्छा पूर्णा जाता। भवतः अपि या कापि इच्छा अस्ति चेत् वदतु, तां पूरयामि'' इति।

'अहं रमां परिणेतुम् इच्छामि' इति उद्वेगेन उक्तवान् गणेशः। गङ्गाधरः उक्तवान्- ''गणेश! भवान् प्रशंसार्हः। भवता मदीया इच्छा पूरिता। अतः अहम् अपि भवदीयाम् इच्छां पूरयामि। सद्यः एव रमायाः भवतः च विवाहः भविष्यति। विवाहानन्तरं रमा सुखेन जीविष्यति इति मम विश्वासः अस्ति'' इति।

एतस्मिन् एव काले ग्रामे एका विचित्रा घटना प्रवृत्ता। यः धनिकः वेष्टीं विक्रीतवान् आसीत् तस्य पुत्रः सप्ताहतः अस्वस्थः आसीत्। केनापि औषधेन तस्य रोगः न दूरङ्गतः। अन्ते धनिकः प्रसिद्धम् एकं सन्यासिनं दृष्टवान्।

सन्यासी बालकं परीक्ष्य उक्तवान्- ''भवता यत् पापम् आचरितं, तेन इदानीं भवतः पुत्रः अस्वस्थः अस्ति। अहम् एतं रोगं निवारयितुं शक्नोमि। किन्तु तदर्थं भवता शुल्कं दातव्यम्।''

धनिकः सन्यसिनः वचनम् अङ्गीकृतवान्।

सन्यासी औषधोपचारं कृत्वा ततः निर्गतः। किन्तु एकसप्ताहानन्तरम् अपि बालकः अस्वस्थः एव आसीत्। पुत्रस्य अस्वास्थ्यं वर्धितं दृष्ट्वा धनिकः चिन्ताक्रान्तः।

धनिकः पुनः अपि सन्यासिसमीपं गतवान्। सर्वं निवेदितवान् च। तदा सन्यासी उक्तवान्- "भवान् मह्यं यत् धनं दत्तवान् तत् न्यायेन सम्पादितं न। अतः मम औषधेन किमपि प्रयोजनं न जातम्" इति।

कम्पमानेन स्वरेण धनिकः पृष्टवान्- "महोदय! मया इदानीं किं करणीयम्? वदतु" इति।

"न्यायपूर्वकं यत् धनं सम्पादितं, तस्य दानेन मदीयम् औषधं परिणामकारि भविष्यति। भवान् तु महाजनः। प्रतिदिनं बहवः भवतः समीपम् आगत्य ऋणं प्रत्यर्पयन्ति। एतादृशानाम नामोच्चारणं कुर्वन् भवान् नाणकं मम हस्ते ददातु। यदा न्यायपूर्वकं सम्पादितं धनं मम हस्ते आगच्छति, तदा भवतः पुत्रः स्वस्थः भविष्यति" इति उक्तवान् सन्यासी।

एतेन धनिकः किञ्चित् मनःसमाधानं प्राप्तवान्। सः अन्तः गत्वा धनं बहिः आनीतवान्। धनदातृणां नामोच्चारणं कुर्वन् एकैकशः नाणकं सन्यासिनः हस्ते दत्तवान्। यदा गणेशेन दत्तं धनं सन्यासिनः हस्ते आगतं तदा, अहो आश्चर्यम्! बहुकालतः अस्वस्थः धनिकस्य पुत्रः झटिति उत्थाय उपविष्टः!

"एतत् धनं न्यायपूर्वकं सम्पादितम्।





भवान् यस्मात् पुरुषात् एतत् स्वीकृतवान् तस्मै इदानीम् एव प्रत्यर्पयतु। एतत् धनम् अन्य-कार्याय उपयोगि भवेत्'' इति उक्तवान् सन्यासी।

तत्क्षणे एव धनिकः गणेशाय तानि चत्वारि सुवर्णनाणकानि प्रत्यर्पितवान्। एतन्-मध्ये ग्रामप्रमुखः धनिकस्य गृहम् आगतवान्। ग्रामप्रमुखस्य पुत्रः अपि अस्वस्थः। 'यः सन्यासी धनिकस्य पुत्राय औषधं दत्तवान् तद्-द्वारा एव मम पुत्रस्य चिकित्सां कारयामि' इति चिन्तयन् आगतवान् आसीत् सः। अतः सः सन्यासिनं स्वगृहं नीतवान्।

सन्यासी ग्रामप्रमुखस्य पुत्रं परीक्ष्य उक्तवान्- ''भवता पूर्वं यत् पापं कृतं, तदेव इदानीं भवतः पुत्रं पीडयति। भवतः समीपे न्याय-पूर्वकं सम्पादितं धनम् यदि स्यात् तर्हि मम औषधं परिणामकारि भवेत्'' इति। एवम् उक्त्वा सः बालकस्य मुखे किमपि चूर्णं स्थापितवान्। ग्रामप्रमुखः प्रतिफलरूपेण दश नाणकानि दत्तवान्।

सप्ताहः अतीतः। तथापि बालकः अस्वस्थः एव अस्ति। काऽपि प्रगतिः न दृश्यते।

एतेन असन्तुष्टः सन्यासी उक्तवान्- ''अहं चिन्तयामि यत् ग्रामे कस्यापि समीपे न्याय-पूर्वकं सम्पादितं धनं नास्ति इति। एषा तु शोचनीया परिस्थितिः'' इति।

''साधुमहाराज! धनिकस्य पुत्रस्य रोगः गणेशस्य धनेन दूरङ्गतः। अतः अहम् अपि गणेशस्य सकाशात् धनम् आनयामि'' इति ग्रामप्रमुखः गन्तुं प्रवृत्तः।

तस्य गमनं निवारयन् सन्यासी उक्तवान्- ''अये, तिष्ठतु तावत्। गणेशः धनिकाय चत्वारि सुवर्णनाणकानि दत्तवान् इति तु सत्यम्। तानि न्यायपूर्वकं सम्पादितानि इत्यपि सत्यम्। किन्तु तद्धनं धनिकः गणेशाय पुरस्काररूपेण प्रत्यर्पितवान् अस्ति। अतः तद्धनम् इदानीं न्यायपूर्वकं सम्पादितम् न। यदि गणेशस्य समीपे एतदतिरिच्य किमपि धनं स्यात् तर्हि तत् आनयतु'' इति।

ग्रामप्रमुखः गणेशस्य गृहं गत्वा सन्यासिनः वचनं श्रावितवान्। खेदपूर्णेन स्वरेण गणेशः

उक्तवान्- "महोदय ! अहं किं करोमि ? मम समीपे तानि सुवर्णनाणकानि विना अन्यत् किमपि नास्ति" इति ।

"इदानीं किं करणीयम् ? न्यायपूर्वकं सम्पादितं धन प्राप्तुं कुत्र गच्छामि ?" इति बहु चिन्तितवान् ग्रामप्रमुखः । अन्ते गणेशस्य समीपे विद्यमानानि तानि नाणकानि एव स्वीकृत्य गतवान् । वास्तविकं विषयं अनिवेद्य एव तानि नाणकानि सन्यासिनः हस्ते दत्तवान् ।

यावत् सन्यासिनः हस्ते तानि नाणकानि पतितानि तावता एव ग्रामप्रमुखस्य पुत्रः मञ्चे उपविष्टवान् । तस्य मुखे अस्वास्थ्यस्य चिह्नम् अपि न दृश्यते स्म ।

ग्रामप्रमुखः आश्चर्यं प्रकटयन् उक्तवान्- "साधुमहाराज ! गणेशस्य धनं महिमान्वितम् इव भाति । धनिकतः प्राप्तं धनं विना गणेशस्य समीपे अन्यत् किमपि न आसीत् । अतः अहं तदेव धनम् आनीतवान्' इति ।

एतेन कोपं प्रकटयन् सन्यासी उक्तवान्- "अहं चिन्तितवान् आसम् यत् धनिकः दानभावनया प्रेरितः, धनं पुरस्काररूपेण दत्तवान् इति । किन्तु सः मां वञ्चितवान् । ये अन्यायपूर्वकं सम्पादितं स्वसमीपे स्थापयन्ति तेषां गृहे सर्वदा एतादृशाः रोगाः भविष्यन्ति एव । न्यायपूर्वकं सम्पादितं धनम् एव तान् रक्षति" इति । एवं वदन् सन्यासी ततः निर्गतः ।

सन्यासिनः वचनानि समग्रे ग्रामे प्रसृतानि । एतेन बहवः भीताः । यतः ते सर्वे गणेशेन कार्यं कारयित्वा योग्यं प्रतिफलं न दत्तवन्तः आसन् । इदानीं ते चिन्तितवन्तः यत् इतः परम् अपि यदि गणेशाय उचितं प्रतिफलं न दीयेत तर्हि विपत्तिः आगच्छेत् इति । अतः सर्वे ग्रामवासिनः परस्परं समालोच्य धनसङ्ग्रहं कृत्वा एकं भवनं एकरद्वय-मितां भूमिं च गणेशाय दत्तवन्तः ।

तद्दिनात् आरभ्य गणेशः रमा च परिश्रमेण कार्यं कुर्वन्तौ सुखेन जीवनं यापितवन्तौ ।





# सञ्चयप्रवृत्तिः

कमलायाः नारायणस्य च परस्परम् अनुरूपं दाम्पत्यम्। एकदा उभौ अपि बन्धुगृहस्य मङ्गलकार्यस्य निमित्तं पार्श्वग्रामं गतवन्तौ। प्रत्यागमनसमये मार्गे एका विपणिः दृष्टा। विपण्यां तद्दिने विशेषवाणिज्यम्। तत्र कदलीफलानां महागुच्छाः विक्रीयन्ते स्म। एतत् दृष्ट्वा कमला एकं महागुच्छं स्वीकर्तुम् इच्छां प्रकटीकृतवती।

सा पतिम् उक्तवती- "अत्र कदलीफलानि अल्पमूल्येन लभ्यन्ते। एकं महागुच्छं क्रीत्वा गृहं नयामः" इति।

"सम्पूर्णं महागुच्छं स्वीकृत्य किं करोति भवती? गृहे तु अहं भवती च, उभौ एव। न पुत्राः, न बान्धवाः" इति उक्तवान् नारायणः।

यदि वयम् अर्धपक्वानि फलानि क्रेष्यामः तर्हि पञ्चदशदिनपर्यन्तं स्थापयितुं शक्ताः भविष्यामः। महागुच्छस्य अत्र चत्वारि रूप्यकाणि। तस्यैव मूल्यम् अस्माकं ग्रामे दश रूप्यकाणि। अतः अत्र क्रयणेन महान् लाभः किल?" इति उक्तवती कमला।

नारायणः तस्याः वचनम् अङ्गीकृतवान्। सा एकं महागुच्छं क्रीतवती। अनन्तरं तत् पत्युः स्कन्धे स्थापितवती।

महता कष्टेन सः अर्धमार्गं यावत् तत् नीतवान्। अनन्तरं 'मया न शक्यते' इति वदन् तत् भूमौ स्थापितवान्।

अर्धमार्गपर्यन्तं नारायणः आनीतवान् किल? अतः कमला सन्तुष्टा। यदि विपण्याम् एव भारवाहः स्वीक्रियते तर्हि रूप्यकद्वयस्य व्ययः भवति स्म। इदानीं तु एकरूप्यकात्मकेन व्ययेन तत् गृहं प्रापयितुं शक्यते स्म।

भारवाहद्वारा महागुच्छः गृहं प्रापितः। भारवाहाय एकं रूप्यकं दत्तं च। तथापि एकरूप्यकस्य सञ्चयः जातः इति सा कमला बहु

"सुभद्रा"

सन्तुष्टा ।

अनन्तरदिनात् आरभ्य महागुच्छस्य फलानि एकैकशः पक्वानि । फलानि रुचिकराणि असन् । अतः पतिः पत्नी च यथेष्टं फलानि खादितवन्तौ । एकविधम् एव फलम् कियत् खादितुं शक्यते ? तथापि पुनरपि खादितवन्तौ । अतः बुभुक्षा मन्दा जाता ।

तदा कमला पतिम् उक्तवती- "पश्यतु, कदलीफलानां कारणतः पाकव्ययः अपि न्यूनः जातः" इति ।

कदलीफलानि खादन् नारायणः कष्टम् अनुभवन् आसीत् । अतः सः असहनयाः उक्तवान्- "एतावता कालेन यः सञ्चयः कृतः तावदेव पर्याप्तम् । यानि कदलीफलानि अवशिष्टानि सन्ति तानि सर्वेभ्यः बालकेभ्यः वितरामः" इति ।

किन्तु कमला नारायणस्य वचनानि न अङ्गीकृतवती । सा उक्तवती- "तावद्दूरेण महता श्रमेण धनं दत्त्वा च एतानि फलानि आनीतानि । एतानि कथं वा अन्येभ्यः वितरितुं शक्यते ?" इति ।

द्वित्रेषु दिनेषु महागुच्छे स्थितानि सर्वाणि फलानि युगपत् एव पक्वानि । एतत् दृष्ट्वा कमला उक्तवती- "प्रातः मध्याह्ने सायं-त्रिवारम् कदलीफलानि एव खादामः" इति ।

वस्तुतः कमला एकम् अपि कदलीफलं अन्येभ्यः दातुं न इच्छति स्म । अतः उभौ अपि दिनत्रयपर्यन्तं केवलं कदलीफलानि एव



खादितवन्तौ। एतावता आनीतानि सर्वाणि फलानि समाप्तानि।

किन्तु एतस्य परिणामः विपरीतः जातः। उभौ अपि असह्यया उदरवेदनया पीडितौ।

नारायणः पत्नीं निन्दन् उक्तवान्- "पश्यतु, भवत्याः सञ्चयप्रवृत्तेः फलम् एतत्। एतादृश-सञ्चयेन किं प्रयोजनम्, येन वयं रोगपीडिताः। इदानीं औषधार्थं धनव्ययः करणीयः एव। सञ्चयापेक्षया औषधव्ययः अधिकः जातः। उदरवेदना अपकीर्तिः च अवशिष्टा, तावदेव" इति।

"अस्तु नाम। इदानीम् अवशिष्टः परिहारः एकः एव। उदरवेदनासमाप्तिपर्यन्तम् उपवासः करणीयः।"

"उपवासकारणतः पुनः अशक्तिः उत्पद्यते। तदानीं तन्निवारणार्थं द्विगुणितः व्ययः करणीयः भविष्यति। इदानीम् अहम् एताम् उदरवेदनां सोढुं न शक्नोमि" इति उक्त्वा नारायणः वैद्यगृहं प्रति धावितवान्।

वैद्यः रूप्यकद्वयं स्वीकृत्य काश्चन गुलिकाः दत्तवान्। 'प्रतिदिनं प्रातः सायं च एकैका स्वीकरणीया' इति उक्तवान्।

गुलिकायाः स्वीकरणेन दिनद्वये एव नारायणस्य उदरवेदना दूरङ्गता। कमलयाः उदरवेदना तु प्रतिदिनं वर्धिता एव।

अन्ते नारायणः वैद्यं स्वगृहम् आनीतवान्। कमलायाः चिन्तनं श्रुत्वा वैद्यः मनसि एव हसितवान्। अनन्तरम् काश्चन गुलिकाः यच्छन् कमलाम् उक्तवान्- "अहम् एताः गुलिकाः निश्शुल्कं ददामि। मम सूचनानुसारं गुलिकाः स्वीकरोति चेत् शीघ्रम् एव उदरवेदना न्यूना भविष्यति" इति।

बहिः आगत्य वैद्यः नारायणम् उक्तवान्- "निश्शुल्कं प्राप्तम् एव सा उचितानुपातेन स्वीकुर्यात्। अतः भवान् ताम् एताः गुलिकाः निश्शुल्कं प्राप्ताः इत्येव वदतु" इति। वैद्य-सूचनानुसारं कमला औषधं स्वीकृत्य शीघ्रम् एव स्वस्था जाता।





# विष्णुकथा

यदा बुद्धस्य आगमनवार्तां श्रुतवन्तः, तदा आरभ्य नागरिकेषु नूतनचैतन्यस्य आविर्भावः अभवत् । कपिलवस्तुनगरस्य सर्वे जनाः बुद्धस्य स्वागतार्थं प्रयत्नशीलाः जाताः । अत्यल्पकाले एव विविधैः अलङ्कारैः शोभितं नगरं नूतननगरम् इव प्रतिभाति स्म । समस्तलोकस्य प्रकाशने ज्योतिस्वरूपः बुद्धदेवः स्वीयः इति अभिमानेन कपिलवस्तुपौराः अपरिमितं सन्तोषं प्राप्तवन्तः । स्वीयराज्यस्य प्रभुरूपेण निरीक्षितः सिद्धार्थकुमारः इदानीं मानवतायाः समस्तप्रपञ्चस्य च सार्वभौमः आसीत् । तादृशस्य अनुरूपं सत्कारं कर्तुं ते सर्वे अत्युत्सुकाः आसन् ।

प्रियकुमारस्य आलिङ्गनभाग्यं कल्पयतः वृद्धस्य शुद्धोदनमहाराजस्य पितृहृदयम् उत्कण्ठितम् आसीत् ।

अहो ! पुरतः प्रशान्तगम्भीरः, अर्धनिमीलितनेत्रः, निश्चलवदनमण्डलशोभितः, करुणामूर्तिः बुद्धः धीरभावेन आगच्छन् आसीत् । तस्य पृष्ठतः 'बुद्धं शरणं गच्छामि, धर्मं शरणं गच्छामि, सङ्घं शरणं गच्छामि' इति दिव्यवाक्यानि उच्चारयन् महान् जनसमूहः सागरः इव दृश्यते स्म । तस्य ध्यानध्वनिः समुद्रघोषवत् आसीत् ।

महाराजः शुद्धोदनः, यशोधरा, राहुलः च राजप्रासादस्य सोपानानि तीर्त्वा पुरतः स्थितवन्तः । चेन्नः आनन्देन अश्रूणि मोचयन् प्राङ्गणस्य पुरतः आगत्य स्थितवान् ।

"बुद्धावतारः"



बुद्धः भिक्षापात्रं गृहीत्वा राजप्रासादस्य समीपम् आगतवान् । राहुलः धावन् आगत्य जनकस्य पादयोः उपरि पतितवान् । यशोधरा चिरकालानन्तरं दृष्टस्य स्वभर्तुः प्रसन्नवदनं निर्निमेषं पश्यन्ती तं नमस्कर्तुं मन्दं मन्दं तस्य समीपम् आगतवती । अनन्तरं तस्य पादयोः उपरि स्वकीयं मस्तकं स्थापितवती । स्वीय-नेत्राभ्यां निस्सरन्त्या अश्रुधारया बुद्धस्य चरण-द्वयम् अभिषिक्तवती ।

प्रियकुमारम् आलिङ्गितुं हस्तौ प्रसार्य आगतः शुद्धोदनः, बुद्धस्य परिव्राजकरूपं भिक्षापात्रं च दृष्ट्वा मतिभ्रान्तः इव तथैव प्रतिमावत् स्थितवान् । भिक्षुरूपधारिणं कुमारं दृष्ट्वा वृद्धराजस्य हृदयं शोकाग्निना दग्धम् अभवत् । नेत्राभ्यां निरन्तरा अश्रुधारा । एवं-रीत्या चिरकालानन्तरं पुत्रदर्शनेन आनन्दं शोकं च युगपत् एव प्राप्तवतः तस्य हस्तौ आलिङ्गनम् अपि विस्मृत्य तथैव स्थगितौ ।

अनन्तरं "तात ! वत्स ! कुमारसिद्धार्थ ! गौतम !" इत्यदिरीत्या शुद्धोदनः उन्मत्तवत् विलपन् तत्रैव अधः पतित्वा मूर्छितः जातः ।

बुद्धः भूमौ उपविश्य, पितुः मस्तकम् अङ्के स्थापयित्वा स्वीयकाषायवस्त्रेण शैत्योपचारं कृत-वान् । कुमारस्य अमृतस्पर्शेन शुद्धोदनः जागृतिं प्राप्तवान् । "जनक ! मम प्रणामं स्वीकरोतु ! अहम् अर्थस्य सिद्धिं प्राप्य सिद्धार्थः भूत्वा आगतः अस्मि" इति वदतः बुद्धस्य अमृतबिन्दुरूपीणि वचनानि शुद्धोदनस्य कर्णयोः पतितानि । बुद्धस्य अर्धनिमीलित-नेत्राभ्यां चन्द्रकिरणाः निस्सरन्तः आसन् । तस्य मुखमण्डले अपूर्वं तेजः दृश्यते स्म । कश्चित् अनिर्वचनीयः प्रभावः शुद्धोदनम् उत्तेजितम् अकरोत् । अशान्तिपथात् शान्ति-पथं प्रति, तमसः ज्योतिर्वलयं प्रति, भ्रमातः सत्यं प्रति तं नयति स्म । तस्य कर्णयोः 'बुद्धं शरणं गच्छामि....' इति वचनानां प्रतिध्वनिः श्रूयते स्म । शुद्धोदनस्य कम्पमाना जिह्वा अपि तानि एव वचनानि अनुवदति स्म । राहुलः अपि तानि एव उच्चरति स्म । प्रजासमूहे अपि तदेव घोषणम् । यशोधरा नेत्रे निमील्य वक्षस्थले अञ्जलिं बद्ध्वा, ध्यानमुद्रायां स्थित्वा

'बुद्धं शरणं गच्छामि' इति जपति स्म ।

तदा बुद्धः राहुलस्य मस्तकं प्रीत्या स्पृशन् "कुमार ! भवान् अपि बुद्धः भूत्वा धर्मं सङ्घं च अनुसरन् मानवतायाः सार्थक्यं सम्पादयतु इति आशीर्वादं ददामि । बुद्धः नाम कः इति भवान् जानाति वा ? केवलम् अहम् एव बुद्धः इति न । उत्तमधर्मान् अहिंसां च ये आदरेण आचरन्ति ते सर्वे बुद्धाः एव । बुद्धत्वम् एव मानवत्वम् । यः मानवः बोधं प्राप्तवान् सः बुद्धः । लोकस्य उद्धारार्थं तादृशाः एव इदानीं अपेक्षिताः । ते एव शरण्याः । तादृशबुद्धैः उपदिष्टाः धर्माः एव मानवसमूहार्थं शान्तिं प्रापयन्ति । धर्मः एव शरण्यः । बुद्धानां सङ्घः एव लोके शरण्यः । बुद्धसङ्घाः एव युगधर्मस्य उद्धारकार्ये समर्थाः" इति उक्तवान् ।

इदानीं यशोधरायाः नेत्रद्वयं कमलवत् विकसितम् । सा बुद्धस्य वदनं निश्चलभावेन पश्यन्ती " स्वामिन् ! आत्मानं भिक्षुरूपेण भवते समर्पयामि । एतावत्पर्यन्तं अहं गृहिणी आसम् । इतःपरं मानवतायाः सेवार्थं अर्पिता परिव्राजिका भविष्यामि । भवतः चरणयोः अनुसरणम् एव मदीयः उचितः धर्मः । मानवसमूहे स्त्रियः अपि समानस्थानीयाः । ताः अपि बौद्धैः आदरणीयाः खलु ? अतः स्त्रीणां कृते बौद्धसङ्घेषु स्थानम् आदरं च अनुगृह्णातु" इति प्रार्थनां कुर्वती भक्त्या प्रणामम् कृतवती ।

एवंरीत्या यशोधरा बौद्धधर्मस्य प्रथमा अनुयायिनी अभवत् ।



एतत्सर्वं पश्यन् आनन्दाश्रूणि स्रावयन् चेन्नः पार्श्वे स्थितः आसीत् । आत्मानं देवताभावेन पश्यन्तं चेन्नं दृष्ट्वा स्वसमीपम् आगन्तुं तं बुद्धः आकारितवान् । चेन्नः समीपम् आगत्य बुद्धं नमस्कर्तुं प्रवृत्तः । तदा तं तथैव निवार्य बुद्धः–"चेन्न, ज्येष्ठानां पुरतः कनिष्ठाः सर्वदा कनिष्ठाः एव । महत्पदवीं प्राप्तवद्भिः अपि कनिष्ठैः ज्येष्ठाः आदरणीयाः । मम भवान् इदानीम् अपि पूजनीयः एव । भवान् मां कपिलवस्तुनगरतः विशालविश्वम् नीतवान् । एतादृशः भवान् पुण्यमूर्तिः खलु ? बुद्धः भूत्वा अहं यानि तत्वानि धर्मान् च ज्ञातवान्, तान् लोकस्य कल्याणार्थम् उप-



दिशामि। तावता अहं भगवान् न जातः। तथा अन्यैः कृतां स्तुतिं श्रोतुम् अपि न इच्छामि। व्यक्तिपूजा अप्रयोजिका। अहं भगवान् इति भावना अपि तथा एव। सर्वसमानः इति भावना एव इदानीम् अपेक्षितः मानवधर्मः'' इति उक्तवान्।

बुद्धस्य वचनानि श्रुत्वा चेन्नः प्रार्थनां कुर्वन् इव-''भगवान् बुद्धः इति भावनया एव वयं महतीं तृप्तिं प्राप्नुमः। तेन धर्माचरणं, सङ्घसेवा, भक्तिविश्वासादयः प्रतिदिनं वर्धन्ते। अतः कृपया भवन्तं देवताभावनया द्रष्टुं पूजयितुं च अस्माकं सर्वेषाम् अवकाशः अस्तु। प्रप्रथमबुद्धः भवान् साक्षात् देवः एव। तथा एव व्यवहारः अस्तु। अत्र न कोऽपि दोषः, न वा अपचारः अस्ति'' इति उक्तवान्।

बुद्धः किमपि अनुक्त्वा तूष्णीं स्थितवान्। तदारभ्य बुद्धः भगवान् बुद्धः इत्येव प्रसिद्धः जातः। सर्वेषां जिह्वासु बुद्धदेवः इत्येव प्रतिष्ठां प्राप्तवान्। श्रेष्ठमानवः एव देवः इति अर्थं मनसि चिन्तयन् बुद्धः ताटस्थ्यम् अवलम्बितवान्।

शाक्यवंशीयाः प्रायः सर्वे जनाः अपि बौद्धधर्मं स्वीकृतवन्तः। ते जनाः बुद्धस्य आदेशानाम् उपदेशानां च प्रचारं कृतवन्तः। ते सर्वे भिक्षुरूपेण परिवर्तिताः, स्वीयसम्पत्तीः सङ्घाय समर्पितवन्तः च। स्वीयजीवनानि तैः जनानां सेवार्थम् आरक्षितानि।

केवलं देवदत्तः एकः बाल्यतः आरभ्य बुद्धस्य विरोधी आसीत्। सः स्पर्धया बौद्धधर्मस्य तिरस्कारं कुर्वन्, ये अल्पजनाः बौद्धधर्मं न स्वीकृतवन्तः, तान् समाकलय्य तैः सह अटति स्म। सः राजसम्बन्धी आसीत्। अतः तस्य अपि केचन अनुचराः आसन्।

बुद्धः कपिलवस्तुनगरं परित्यज्य पुनः पूर्वस्थानं प्रस्थितवान्। तस्य अनुचरैः शिष्यैः च सह यशोधरा राहुलः च प्रस्थितवन्तौ।

एवंरीत्या प्रत्यागमनमार्गे बुद्धः सुजातायाः गृहं भिक्षुरूपेण गतवान्। पूर्वं प्रतिज्ञात वचनम् अविस्मृत्य आगतं तं दृष्ट्वा सुजातायाः जातः आनन्दः सीमातीतः आसीत्। बुद्धः सुजातायाः कुमारम् आशीर्वचनैः अनुगृह्णन्

राहुलं दृष्ट्वा "राहुल ! एषः बालः भवतः अनुजः । भवन्तौ द्वौ अपि स्नेहितौ, आप्तौ, सहोदरौ, वर्णभेदरहितौ च भूत्वा मानवतां, वसुधैव कुटुम्बकम् इति नीतिं च लोके प्रसारयताम्" इति उक्तवान् ।

सुजाता बुद्धस्य शिष्या भूत्वा यशोधरया सह प्रस्थिता । अनन्तरं बुद्धः यशोधरां सुजातां च उद्दिश्य "गृहिण्यः सत्यः एव स्त्रियः बौद्धधर्मम् अवलम्ब्य स्वपुत्रान् उत्तममानवान् कुर्वन्तु । इत्थं ताः श्रेष्ठाः मातृमूर्तयः भवन्तु" इति आदिष्टवान् ।

बुद्धः स्वीयान् अनुचरशिष्यान् सर्वान् अपि धर्मचक्रसञ्चालनार्थं चतसृषु दिक्षु अपि प्रेषितवान् । यशोधरां राहुलं च कपिलवस्तुनगरं सम्प्रेष्य, तत्र वृद्धस्य शुद्धोदनस्य योगक्षेमनिर्वहणं राजवंशस्य धर्ममार्गे नयनं च इति कार्यद्वयं तयोः कृते विहितवान् ।

एवंरीत्या सर्वेषांम् अपि प्रेषणानन्तरं बुद्धः एकाकी एव अरण्यमार्गे गन्तुं प्रवृत्तः । एवं गच्छन् सः एकं घोरारण्यं प्रविष्टवान् । तस्मिन् अरण्ये घोरातिघोरः क्रूरतायाः मूर्तिः 'अङ्गुलिमालः' इत्येकः मार्गलुण्ठकः आसीत् । ये ये तत् अरण्यं प्रविशन्ति तेषाम् अङ्गुष्ठानां मालां कृत्वा, तां मालां कण्ठे धरति स्म सः क्रूरः चोरः । ये ये तस्य दृष्टिपथं प्रविशन्ति ,ते सर्वे भीत्या तम् एव शरणं गच्छन्ति स्म । अनेकेषां पथिकानां सर्वसम्पत्तिम् अपहृत्य, तेषां



हननं करोति स्म सः । तेषां सर्वेषाम् अपि अङ्गुष्ठान् सः अपहरति स्म ।

भूमण्डले अस्मिन् सर्वे अपि आत्मानं दृष्ट्वा भीताः भवेयुः इति अङ्गुलिमालस्य उद्देशः आसीत् ।

तत् अरण्यम् एकाकिनं गच्छन्तं बुद्धं दृष्ट्वा मार्गे केचन मेषपालाः "स्वामिन्, तस्मिन् मार्गे किमर्थं गच्छति ? चत्वारिंशत्तः अपि न्यूनजनाः यदि तस्मिन् मार्गे गच्छन्ति, तर्हि एकः अपि जीवन् न प्रत्यागच्छति । एकाकिना तु तत्र सर्वथा न गन्तव्युम् । कदाचित् यः कोऽपि जीवेत, तस्य अङ्गुष्ठं कर्तयित्वा गृह्णाति सः चोरः । तत्र तादृशः एकः भयङ्करः चोरः अस्ति" इति जागरितवन्तः ।



किन्तु बुद्धः तेषां मेषपालानां जागृतिवचनं अशृण्वन् इव अरण्यमध्ये अग्रे अग्रे गतवान् ।

एवंरीत्या अरण्ये चलन्तम् एकाकिनं बुद्धं दृष्टवान् अङ्गुलिमालः । स्वकाषायवस्त्रमध्ये किमपि गुप्तरूपेण स्थापयित्वा सः गच्छन् अस्ति इति सः चिन्तितवान् ।

अङ्गुलिमालः भयङ्करं रक्तलिप्तम् अतितीक्ष्णं च स्वीयं खड्गम् उपरि उन्नीय प्रकाशयन् "कः भवान् ? वस्त्रमध्ये किं तत् ? अत्र ददातु तत्" इति उक्तवान् ।

बुद्धः मन्दहासं प्रकटयन् काषायवस्त्रमध्ये स्थापितं भिक्षापात्रं बहिः आनीय अङ्गुलिमालाय दत्तवान् ।

अङ्गुलिमालः तत् गृहीत्वा इतस्ततः परिवर्त्य दृष्ट्वा "भिक्षापात्रम् ! भवान् भिक्षुकः वा भवतु, यो वा को वा भवतु । किन्तु माम् एव अन्विष्यन् इव अत्र आगत्य, मम पुरतः एव स्थित्वा, हासं प्रदर्शयन् मम हस्ते एतत् अरिष्टकाष्ठं ददाति किल ? भवतः कियान् गर्वः स्यात् ? भवतः भीतिः एव नास्ति वा ? मम खड्गं दृष्टवान् किल भवान् ? अहं कः इति जानाति किल ?" इति पृष्टवान् ।

"भवान् मनुष्यः इति ज्ञातवान् । अहम् अपि मनुष्यः एव । एवं हि सति, भयस्य किं वा कारणं स्यात् ?" इति उक्तवान् बुद्धः ।

"अहं न साधारणः मनुष्यः । भवान् स्वप्राणान् इच्छति चेत् स्वीयम् अङ्गुष्ठं मह्यं दत्त्वा अनन्तरम् एव गन्तुं शक्नोति । अन्यथा अहं भवन्तं हत्वा, भवतः अङ्गुष्ठं छित्वा ग्रहीष्यामि । मम कण्ठे विद्यमानाम् अङ्गुष्ठानाम् एतां मालां दृष्टवान् वा ?" इति गर्जितवान् अङ्गुलिमालः ।

"भवान् मां मारयति वा ? तत् तु किमपि महत्कार्यं न । अतीव सुलभं कार्यम् । खड्गः एव तत् कार्यं लीलया करोति । जातस्य मरणं ध्रुवम् इति वाक्यं भवान् न जानाति वा ? इदानीं यदि मम मरणं भवता साधनीयम् इति विधिः अस्ति, तर्हि भवान् स्वकार्यं करोतु । सन्तोषेण अहं मरिष्यामि । अद्य भवान् मां मारयति । एवमेव यदाकदाचित् भवतः अपि मरणं निश्चितमेव खलु ? तदा भवान् मद्वत

निश्चिन्तः सन् हसन् एव मृत्युं स्वीकर्तुं शक्नोति वा ? एतावत्पर्यन्तम् अहं कस्य अपि अपकारं वा हानिं वा न कृतवान्। भवतः अपि न करोमि। मनसि अपि भवतः निन्दां न करोमि। साधुजीवनेन तृप्तः अहम् आनन्देन मृत्युं स्वीकरिष्यामि। भवतः मरणसमयः अपि तथा एव भवतु इति मम आशा'' इति उक्तवान् बुद्धः।

बुद्धस्य वचनानि श्रुत्वा अङ्गुलिमालः भ्रान्तः इव निश्चेष्टितः जातः। किमपि आलोचयन् तथैव स्थितवान्। ''स्वीयपापानां किमपि प्रायश्चित्तमेव नास्ति। एतादृशं मां कः वा क्षाम्यति? तादृशी दया कस्य वा स्यात्?'' इति एतादृशचिन्तया खिन्नः चोरः सहसा बुद्धं स्मृतवान्। पूर्वं कदाचित् सः बुद्धस्य विषयं श्रुतवान् आसीत्। 'इदानीं सः एव मम उद्धारकर्ता। कुत्रचित् श्रुतं बुद्धस्य मूल-मन्त्रम् इदानीं वदामि' इति चिन्तयन् ''बुद्धं शरणं गच्छामि'' इति पठितवान्।

''अङ्गुलिमाल! अहम् एव बुद्धः। भवतः कृते एव आगतवान् अस्मि। अतः एव भिक्षापात्रं भवते दत्तवान्। गतजीवनं गतजन्म इव विस्मरतु। इदानीं भवान् मम शिष्यः। चलतु, अग्रे गच्छामः'' इति उक्तवान् बुद्धः।

''बुद्धभगवन्!'' इति आक्रोशं कुर्वन् अङ्गुलिमालः बुद्धस्य चरणयोः उपरि पतित-वान्। अनन्तरं ''केवलं मम एकस्य एव उद्धारः न समीचीनः। मम सर्वे अनुचराः भवतः शिष्याः, भिक्षवः!'' इति उक्त्वा अङ्गुलिमालः स्वीयान् सर्वान् आहूय, ''तान् सर्वान् अपि अनुगृह्णातु'' इति प्रार्थितवान्।

अङ्गुलिमालः तस्य सर्वे अनुचराः च बौद्धभिक्षवः भूत्वा बुद्धम् अनुसृत्य गतवन्तः। अरण्यस्य प्रवेशसमये बुद्धः एकाकी आसीत्। निर्गमनसमये महान् समूहः तेन सह आसीत्।

इत्थं बुद्धस्य उपदेशवचनानि श्रुत्वा अनेके दुष्टाः पश्चात्तापेन बुद्धस्य शिष्याः जाताः, तथा सङ्घसेवार्थं शेषजीवनं समर्प्य पूताः अभवन्।



# वृत्तिधर्मः

शिवपुरग्रामे रामनाथः नाम वैद्यः आसीत्। सः दरिद्राणां चिकित्सां निश्शुल्कं करोति स्म। धनिकाः अपि यावत् यच्छन्ति तावदेव स्वीकरोति स्म। दरिद्राः यदि कदाचित् अधिकं यच्छन्ति तर्हि तान् तर्जयति स्म एषः।

एकदा रामनाथः रात्रौ निद्रामग्नः आसीत्। तदा कश्चित् आगत्य द्वारशब्दं कृतवान्। रामनाथः उत्थाय द्वारम् उद्घाटितवान्। द्वारे एकः युवकः एकः वृद्धः च दृष्टौ। युवकः पार्श्वग्रामीणः। तदीया भगिनी तीव्रया उदरवेदनया पीडिता आसीत्। वृद्धः तु शिवपुरीयः एव। तदीया पौत्री विषमज्वरेण पीडिता अस्ति।

रामनाथः तौ पृष्टवान्- "भवतोः कः चिकित्सार्थं धनं व्ययीकर्तुं सिद्धः अस्ति?" इति।

युवकः झटिति उक्तवान्- "अहं तु धनिकः। अतः भवान् यावत् इच्छति तावत् दातुं समर्थः" इति।

वृद्धः तु मौनं स्थितवान् आसीत्। तदा रामनाथः युवकम् उक्तवान्- 'पार्श्वमार्गे कृष्णाचार्यः नाम प्रसिद्धः वैद्यः अस्ति। सः धनं विना चिकित्सां न करोति। भवतः आर्थिकपरिस्थितिः तु उत्तमा। अतः भवान् कृष्णाचार्यं नयतु। अहं भवता सह आगच्छेयम्। किन्तु कृष्णाचार्यः एतेन सह गन्तुं सिद्धः न भवेत् किल? अतः भवान् अन्यथा न चिन्तयतु' इति। अनन्तरं सः वृद्धेन सह प्रस्थितः च।





# अनुशासनम्

इराकदेशस्य एकस्मिन् लघुपत्तने एकस्यां पाठशालायां हसन अब्दालिः अध्यापकः आसीत्। तस्य धारणा आसीत् यत् बालानां शिक्षणे अनुशासने च अहम् एव समर्थः इति।

कश्चित् बालकः एकनिमेषं यावत् विलम्बेन आगमिष्यति चेत् तस्मै चतुर्वारं वेत्रप्रहारः! पाठनसमये कश्चित् क्षौति चेत् सर्वैः हस्तौ बद्ध्वा उत्थातव्यम् आसीत्। अनन्तरं सर्वैः सामूहिकतया प्रार्थना करणीया आसीत्- ''देवः सर्वान् क्षाम्यतु'' इति।

अब्दालेः मित्राणि कदाचित् तं बोधितवन्तः- ''अनुशासनस्य नाम्नि एवं कठोरदण्डनं न उचितम्। कठोरदण्डनेन प्रगतिः किं, बालाः पूर्वापेक्षया दुष्टाः भविष्यन्ति'' इति।

किन्तु अब्दालिः एतत्सर्वं न अङ्गीकरोति। सः स्वकीयं व्यवहारं समर्थयन् कथयति- ''यदि वेत्रप्रहारस्य स्मरणं न भवति तर्हि बालाः श्रद्धया न पठन्ति एव। यदा एकः क्षौति तदा सर्वे उत्थाय हस्तौ बद्ध्वा तिष्ठन्ति। एतेन नियमेन सर्वेषु एकताभावः जागरितः भविष्यति'' इति।

नूतनस्य एतस्य अध्यापकस्य शिक्षणपद्धतिं बहवः पालकाः प्रशंसितवन्तः। ते इच्छन्ति स्म यत् एतादृशः कश्चित् अध्यापकः बालकान् सर्वान् अनुशासनपूर्वकं पाठयतु इति।

केचन तदा तदा उच्चस्वरेण अब्दालिप्रशंसां कुर्वन्ति स्म- ''एतस्य अध्यापकस्य पर्यवेक्षणेन पाठनेन च अस्मदीयाः बालकाः अल्पे एव काले पण्डिताः भविष्यन्ति। पूर्वम् अस्यां शालायां बहवः अध्यापकाः आसन्। ते सर्वे बालकान् केवलं पाठयन्ति स्म। अनुशासनपद्धतिम् एव ते न जानन्ति स्म। अनुशासनपूर्वकं पाठयितुं समर्थः कश्चित् अध्यापकः इदंप्रथमतया अत्र प्राप्तः'' इति। एतत्सर्वं अब्दालिः अपि तदा तदा शृणोति स्म।

''अरेबिया कथा''

प्रतिवर्षं सर्वे बालकाः सम्भूय विनोद-यात्रार्थं नगरसमीपस्थम् उद्यानवनं गच्छन्ति स्म। एकदा एतादृशीं विनोदयात्रां समाप्य सर्वे बालकाः स्वगृहं प्रत्यागच्छन्तः आसन्। तदानीं अपराह्णः। तीव्रं सूर्यातपः बाधते। बहवः विद्यार्थिनः पिपासया पीडिताः आसन्। तेषां समीपे यत् जलपात्रम् आसीत् तत्र जलं समाप्तम् आसीत्।

अब्दालिः परितः स्वदृष्टिं प्रसारितवान्। समीपे एकः कूपः तेन दृष्टः। सः विद्यार्थिनः उक्तवान्- "पश्यन्तु। अत्र समीपे एव एकः कूपः दृश्यते। तत्र रज्जुः अपि दृश्यते। वयं तत्र गत्वा जलपात्रसाहाय्येन जलं स्वीकृत्य यथेष्टं पिबामः" इति। अनन्तरं सः विद्यार्थिनः कूपसमीपं नीतवान्।

सः कश्चन पुरातनः कूपः। कूपस्य अन्तः जलं तु आसीत्। किन्तु तत्र शिलाः यथेष्टं पतिताः आसन्। अतः महता प्रयत्नेन अपि जलपात्रद्वारा जलं प्राप्तुं तैः न शक्तम्।

तदा अब्दालिः विद्यार्थिनः उक्तवान्- "अहं कूपे अवतरामि। अधः गत्वा जलपात्रं पूरयामि। भवन्तः रज्जुसाहाय्येन तत् जलं उपरि आनयन्तु। अन्ते रज्जुसाहाय्येन अहम् अपि उपरि आगच्छामि" इति।

एवम् उक्त्वा सः रज्जुं स्वकटिप्रदेशे बद्ध-वान्। विद्यार्थिनः रज्जुसाहाय्येन तं क्रमशः कूपे अवतारितवन्तः।

अब्दालिः कूपस्य अन्तः गत्वा दृष्टवान्-



तत्र एका विशालशिला जलस्य मध्ये पतिता अस्ति। सः प्रयत्नेन तां शिलां पार्श्वे स्थापितवान्। जलपात्रं जलेन पूरितवान् च। अनन्तरं कटिप्रदेशे बद्धायाः रज्जोः ग्रन्थिं निष्कास्य तत्र जलपात्रं बद्धवान्। जलपूर्णं तत् पात्रं बालाः उपरि आकृष्टवन्तः।

एवं पञ्चवारम् अब्दालिः जलपात्रं पूरयित्वा दत्तवान्। सर्वे अपि बालाः यथेष्टं जलं पीतवन्तः।

अन्ते जलपात्रं विमोच्य केवलां रज्जुं कूपस्य अन्तः प्रेषितवन्तः।

अब्दालिः रज्जुं स्वकटिप्रदेशे सुदृढं बद्धवान्। बालकाः जागरूकतया उपरि आक्रष्टुम आरब्धवन्तः। तटं प्राप्तुम् इतोऽपि किञ्चित् अन्तरम् अवशिष्टम् अस्ति। तावति काले विद्यार्थिषु कृतः कस्यचित् क्षुवशब्दः श्रुतः। पुनश्च किं वक्तव्यम्! अध्यापकम् उपरि आनेतुं प्रवृत्ताः बालाः सर्वे क्षुवशब्दश्रवणमात्रेण हस्तौ बद्ध्वा स्थित्वा एककण्ठेन उक्तवन्तः—"देवः सर्वान् क्षाम्यतु" इति।

यद्यपि विद्यार्थिभिः आत्मना कृतं अविवेकयुतकार्यं तत्क्षणे एव ज्ञातम्। किन्तु तावति काले अध्यापकः कूपे पतितः आसीत्।

शिलाघर्षणेन अब्दालेः कटिप्रदेशे असह्या वेदना उत्पन्ना आसीत्।

अब्दालिः वेदनया पीडितः उच्चैः आक्रोशनम् आरब्धवान्। दिग्भ्रान्ताः बालाः पथिकान् साहाय्यम् याचितवन्तः। आक्रोशनं श्रुत्वा केचन तत्र आगतवन्तः। महता कष्टेन अब्दालिम् उपरि आनीतवन्तः।

चिकित्सार्थम अब्दालिः चिकित्सालयं नीतः। एकमासपर्यन्तम् अब्दालिः चिकित्सालये स्थितवान्। तत्र औषधोपचारेण सः स्वस्थः जातः।

एतदनन्तरम् अब्दालिः अनुशासननाम्ना विद्यार्थिनां दण्डनं परित्यक्तवान्। सः ज्ञातवान् यत् अनुशासनं नाम कठोरदण्डनं न। अनुशासनभावना छात्राणां मनसि स्वयं उत्पन्ना भवेत् इति।



# अवमानः

कमलपुरस्य निवासी भूपालः स्वपुत्रीं गार्गेयपुरस्य वरप्रसादस्य पुत्राय दातुम् इच्छति स्म। वरप्रसादस्य परिवारसदस्याः सर्वे आगत्य वधूं दृष्टवन्तः। वधूं सर्वे अङ्गीकृतवन्तः। वरप्रसादस्य सम्पत्त्या भूपतिः अपि सन्तुष्टः।

अनन्तरं सः एकदा विवाहनिश्चयार्थं मित्रेण राघवेण सह वरप्रसादस्य गृहं गतवान्। वरप्रसादेन ग्रामीणाः त्रिचतुराः आहूताः आसन्। वरदक्षिणादिविषये वार्तालापः सञ्जातः। तावति काले वरप्रसादस्य पुत्री रुदती तत्र आगतवती। सा अपि विवाहयोग्या आसीत्।

वरप्रसादः पुत्रीं रोदनकारणं पृष्टवान्। सा अश्रूणि मार्जयन्ती उक्तवती- "यदा अहं देवालयतः आगच्छन्ती आसम् तदा नारायणः मम वेणीं गृहीत्वा आकृष्टवान्" इति।

"स च दुष्टः इति ख्यातः। भवती किमर्थम् एकाकिनी गतवती?" इति वरप्रसादः पुत्रीं तर्जितवान्।

"मया बहुवार उक्तम्। तथापि भवती एकाकिनी एव गतवती" इति वरप्रसादस्य पुत्रः अपि स्वभगिनीं तर्जितवान्।

तदा "वरप्रसादमहोदय! पुनः मिलामः" इति वदन् सर्वैः निषिध्यमानः अपि भूपालः प्रस्थितः एव।

मार्गे राघवः भूपालं पृष्टवान्- "भवान् किमर्थम् अकस्मात् उत्थय आगतवान्?" इति।

"स्वगृहस्य कन्यायाः अपमाने प्रवृत्ते अपि, सर्वे असहायाः इव तूष्णीं स्थितवन्तः। भविष्ये या स्नुषा भविष्यति तस्याः परिस्थितिः अपि एवमेव किल? अतः अहं मम पुत्रीं एतद्गृहाय दातुं न इच्छामि" इति उक्तवान् भूपालः।



## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां एप्रिल्-८५ मासे प्रकटयिष्यामः !**





❀उपरितनं चित्रद्वयं पश्यन्तु। तस्य युक्तां शीर्षिकां परस्पर-सम्बन्धि–वाक्यद्वयेन लिखित्वा फेब्रवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/ – रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

चन्दमामा (संस्कृतम्)
७३/२' अक्षरम्' रङ्गारावमार्गः, शङ्करपुरम्, बेङ्गलूरु–'५६०००४

---

'डिसेम्बर' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम्– शीघ्रं क्रामतु स्यात् अपायः।

द्वितीयचित्रम्– मन्दम् अभिसरतु, तत् उपायः।

प्रेषिका– श्रीमती गायत्री रामराव, ५२, सुशीला मेन रोड, उप्पारहळ्ळी, बेङ्गलूरु-४

---

**भवन्तः जानन्ति वा ? ( उत्तराणि )**

१. सर ऐसाक् न्यूटन् । २. रिचर्ड् तृतीयः, पञ्चदशः लूईस्, नेपोलियन् बोनापार्ट्।

३. फ्लारेन्स् नैटिङ्गेल् । ४. अलेक्साण्डर् (सिकन्दर्)

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, . Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अतिशेते | Excels |
| अनुशासनम् | Discipline |
| आरक्षितम् | Reserved |
| उलूकः | Owl |
| कण्टकः | Thorn |
| कदलीफलम् | Banana |
| कन्दरः | Cave |
| कशा | Whip |
| कांस्यम् | Bronze |
| कूपः | Well |
| क्षामः | Famine |
| क्षुवः | Sneeze |
| क्षौति | Sneezer |
| ग्रन्थिः | Knot |
| घूर्णयन् | Swinging |
| चञ्चुः | Beak |
| चूर्णम् | Powder |
| जामाता | Son-in-law |
| दूरदर्शी | One who can foresee |
| दौहित्री | Grand-daughter (Daughter's daughter) |
| धर्तुम् | To wear |
| नखः | Nail |
| निश्चेष्टितः | Unconscious |
| निश्शुल्कम् | Free |
| पर्यवेक्षणम् | Supervision |
| पाञ्चालिका | Doll |
| पिच्छम् | Feather |
| पिपासा | Thirst |
| प्रतिवक्ता | Opponent |
| प्राङ्गणम् | Frontage |
| भल्लूकः | Bear |
| भारवाहः | Porter |
| मण्डूकः | Frog |
| महागुच्छः | Bunch |
| माण्डलिकः | Chieftain |
| रक्तलिप्तम् | Blood-stained |
| रज्जुः | Rope |
| वटवृक्षः | Banian tree |
| वार्धक्यम् | Old age |
| विश्वविक्रमः | world-record |
| वेणी | Lock of hair |
| वेमा | Loom |
| शुष्ककाष्ठम् | Firewood |
| श्मश्रु | Moustache |
| सञ्चयः | Saving |
| स्नुषा | Daughter-in-law |
| हरिणः | Stag |
| हुतात्मा | Martyr |

# चलचित्रम्

| | |
|---|---|
| रामचंद्रः- हरिः ओं यतीश ! कुतः आगच्छति ? | Hello, Yatish! Where are you from |
| यतीशः- कार्यालयतः आगच्छन् अस्मि । भवान् कुतः आगच्छति ? | Returning from the office? How about you? |
| रा- चलचित्रं द्रष्टुं गतवान् आसम् । | I went for a movie. |
| य- चलचित्रं कथम् आसीत् ? | How was it? |
| रा- सामान्यतः आसीत् । | It was so so. |
| य- कस्य निर्देशनम् ? | Who is the Director? |
| रा- कस्य इति न स्मरामि भोः । | I don't remember. |
| य- चित्रमन्दिरं पूर्णम् आसीत् वा ? | Was the house full? |
| रा- हन्त ! तद्विषये किं वदामि ? महान् सम्मर्दः... । | My God! There was a heavy rush...! |
| य- चित्रं न तथा समीचीनम् आसीत् इति उक्तवान् ? | You said it was not all that good! |
| रा- जनानां किं भोः ? यद्यत् चित्रम् आगच्छति तत्सर्वं पश्यन्ति ते । तत्रापि गतसप्ताहे एव एतस्य चित्रस्य विमोचनम् । अतः सर्वदा चित्रमन्दिरम् पूर्णम् एव । | That is no consideration. There are people who see any and every film that comes their way and more over this one was released only last week. That is why the theatre is always full. |
| रा- मया अपि बहुकालतः चित्रं न दृष्टम् । | I haven't seen a movie for quite some time. |
| य- 'कमला' चित्रमन्दिरे समीचीनं चित्रम् आगतम् इति श्रुतवान् । आगामिभानुवासरे गच्छाम वा ? | I was told there is a good film running in Kamala theatre. Shall we see it next Sunday? |
| य- न शक्यते इति भाति भोः । यतः आगामिभानुवासरे अस्माकं कार्यालयीयाः सर्वे विहारयात्रार्थं गमिष्यामः । | I don't think I can go with you. We have a picnic programme in our office next Sunday. |
| रा- प्रत्यागमनं कदा ? | When do you get back? |
| य- प्रातः प्रस्थाय सायं प्रत्यागमिष्यामः । | We will be leaving in the morning and coming back in the evening. |
| रा- तर्हि अन्तिमप्रदर्शनार्थं गमिष्यामः तावत् । | We will go for the last show then. |
| य- अस्तु, पश्यामः । | Okay, let us see. |